को मृतकम्बल हारकः ८६ हरिश्चन्द्र उवाच नाहं चण्डाल दासत्व मिच्छे यत्सुविगर्हितं वरंशापाग्निना दग्धो
न चण्डाल वशंगतः ८७ पक्षिण ऊचुः तस्यैवं वदतः प्राप्तो विश्वामित्रस्तपोनिधिः कोपामर्षविवृत्ताक्षः प्राह
चेदं नराधिपं ८८ विश्वामित्र उवाच चण्डालोऽयमनल्पंते दातुं वित्तमुपस्थितः कस्मान्न दीयते मह्यमशेषा
यज्ञदक्षिणा ८९ हरिश्चन्द्र उवाच भगवन् सूर्य्यवंशोत्थमात्मानं वेद्मि कौशिक कथं चण्डालदासत्वं गमिष्ये
वित्तकामुकः ९० विश्वामित्र उवाच यदि चण्डाल वित्तंत्वमात्मविक्रयजं मम न प्रदास्यसि कालेन शप्स्यामि
त्वामसंशयं ९१ पक्षिण ऊचुः हरिश्चन्द्रस्ततो राजा चिन्तावस्थितजीवितः प्रसीदेति वदन् पादावृषेर्जग्राह वि-
ह्वलः ९२ दासोऽस्म्यार्तोऽस्मि भीतोऽस्मि त्वद्भक्तश्च विशेषतः कुरु प्रसादं विप्रर्षे कष्टश्चण्डालसङ्करः ९३
भवेयं वित्तशेषेण सर्व्वकर्मकरो वशः तवैव मुनिशार्दूल प्रेष्यश्चित्तानुवर्त्तकः ९४ विश्वामित्र उवाच यदि प्रेष्यो
मम भवान् चण्डालाय ततो मया दासभावमनुप्राप्तो दत्तो वित्तार्बुदेन वै ९५ पक्षिण ऊचुः एवमुक्ते तदा तेन श्वप-
 ाको हृष्टमानसः विश्वामित्राय तद्द्रव्यं दत्वा बद्ध्वा नरेश्वरं ९६ दण्डप्रहारसंभ्रान्तमतीव व्याकुलेन्द्रियं इष्ट-
बन्धुवियोगार्त्तमनयन्निजपत्तनं ९७ हरिश्चन्द्रस्ततो राजा वसंश्चण्डालपत्तने प्रातर्मध्याह्नसमये सायञ्चैतद
गायत ९८ बाला दीनमुखी दृष्ट्वा बालं दीनमुखं पुरः मां स्मरत्यसुखाविष्टा मोचयिष्यति नो नृपः ९९ उपात्तवि-
त्तो विप्राय दत्वा वित्तमतोऽधिकं न सा मां मृगशावाक्षी वेत्ति पापतरं कृतं १०० राज्यनाशः सुहृत्त्यागो भार्य्यात-
नयविक्रयः प्राप्ता चण्डालता चेयमहो दुःखपरम्परा १०१ एवं स निवसन्नित्यं स्मरन् दयितं सुतं भार्य्यांञ्चात्म-
समां विष्टां हृतसर्व्वस्व आतुरः १०२ कस्यचित्त्वथ कालस्य मृतचेलापहारकः हरिश्चन्द्रोऽभवद्राजा श्मशा-
ने तद्वशानुगः १०३ चण्डालेनानुशिष्टश्च मृतचेलापहारिणा शवागमनमन्विच्छन्निह तिष्ठ दिवानिशं १०४॥
इदं राज्ञोऽपि देयञ्च षड्भागन्तु शवं प्रति त्रयस्तु मम भागाः स्युर्द्वौ भागौ तव वेतनं १०५ इति श्रुत्वा समाहृष्टो जगा-
म शवमन्दिरं दिशं तु दक्षिणां यत्र वाराणस्यां स्थितं तदा १०६ श्मशानं घोरसंनादं शिवाशतसमाकुलं शव-
 मौलिसमाकीर्णं दुर्गन्धं बहुधूमकं १०७ पिशाचभूतवेतालडाकिनीयक्षसंकुलं गृध्रगोमायुसंकीर्णं श्ववृन्दपरि

वारितं १०८ अस्थिसंघातसंकीर्णं महादुर्गन्धसंकुलं नानामृतसुहृन्नादरौद्रकोलाहलायुतं १०९ हा पुत्र मित्र
हा बन्धो भ्रातर्वत्स प्रियाद्य मे हा पते भगिनी मातर्हा मातुल पितामह ११० मातामह पितः पौत्र क्व गतोऽस्येहि
बान्धव इत्येवं वदतां यत्र ध्वनिः संश्रूयते महान् १११ ज्वलन्मांसवसामेदश्छमच्छमितसंकुलं ११२ अर्धदग्धाः
शवाः श्यामा विकसद्दन्तपंक्तयः हसन्तीवाग्निमध्यस्थाः कायस्येयं दशा त्विति ११३ अग्नेश्चटचटाशब्दो वय
सां नास्थिपंक्तिषु बान्धवाक्रन्दशब्दश्च पुक्कसेषु महर्षेजः ११४ गायतां भूतवेतालपिशाचगणरक्षसां श्रूयते सु-
महान् घोरः कल्पान्त इव निःस्वनः ११५ महामहिषकारीषगोमयकूटराशिसंकुलं तदुत्थभस्मकूटैश्च वृतं साऽस्थि
भिरुन्नतैः ११६ नानोपहारस्रग्दीपकाकविक्षेपकालिकं अनेकशब्दबहुलं श्मशानं नरकायते ११७ सवह्निगर्भै
रशिवैः शिवारुतैर्निनादितं भीषणारावगह्वरं भयं भयस्याप्युपसज्जने भृशं श्मशानमाक्रन्दविरावदुःसहं स राजा त-
त्र संप्राप्तो दुःखितः शोचनोद्यतः ११८ हा भृत्या मन्त्रिणो विप्राः क्व तद्राज्यं विधेर्गतं ११९ हा शैव्ये पुत्र हा बाल
۲۸ मां त्यक्त्वा मन्दभाग्यकं विश्वामित्रस्य दोषेण गताः कुत्र पितर्मम १२० इत्येवं चिन्तयंस्तत्र चाण्डालोक्तं पुनः
पुनः मलिनो रूक्षसर्वाङ्गः केशवान् गन्धवान् ध्वजी १२१ लकुटी कालकल्पश्च धावंश्चापि मृतस्ततः अस्मिन्
शव इदं मूल्यं प्राप्तं प्राप्स्यामि चाप्युत १२२ इदं मम इदं राज्ञे मुख्यचाण्डालके त्विदं इति धावन् दिशो राजा जीवन्
योन्यन्तरं गतः १२३ जीर्णकर्पटसुग्रन्थिकृतकन्थापरिग्रहः चिताभस्मरजोलिप्तमुखबाहूदराङ्घ्रिकः ॥१२४॥
नानामेदोवसामज्जालिप्तपाण्यङ्गुलिः श्वसन् नानाशवोदनकृताहारतृप्तिपरायणः १२५ तदीयमाल्यसंश्लेष-
कृतमस्तकमण्डनः न रात्रौ न दिवा शेते हा हेति प्रवदन्मुहुः १२६ एवं द्वादश मासास्तु नीताः शतसमोपमाः
स कदाचिन्नृपश्रेष्ठः श्रान्तो बन्धुवियोगवान् १२७ निद्राभिभूतो रूक्षाङ्गो निश्चेष्टः सुष्वाप च तत्र स्वप्नमनीयेस
दृष्टवानद्भुतं महत् १२८ श्मशानाभ्यासयोगेन दैवस्य बलवत्तया अन्यदेहेन दत्त्वा तु गुरवे गुरुदक्षिणां १२९ तदा
द्वादश वर्षाणि दुःखदानात्तु निष्कृतिः आत्मानं स ददर्शाथ पुक्कसीगर्भसम्भवं १३० तत्रस्थश्चाप्यसौ राजा सो
مارکنڈی پوران ऽचिन्तयदिदं तदा इतो निष्क्रान्तमात्रोऽहि दानधर्मं करोम्यहम् १३१ अनन्तरं स जातस्तु तदा पुक्कसबालकः श्मशान

मा॰पु॰ २६ मृत संस्कार कर्त्तासु सदोद्यतः १३२ ग्रामे तु सप्तमे वर्षे श्मशाने ऽथ मृतो द्विज आनीतो बन्धुभिर्दृष्टस्तेन तत्राध-
नो गुरौ १३३ मूल्यार्थिना तु तेनापि परिभूतास्तु ब्राह्मणाः ऊचुस्ते ब्राह्मणास्तत्र विश्वामित्रस्य चेष्टितम् १३४
पापिष्ठ मूर्ख कर्म्म कुरुत्वं पापकारक हरिश्चन्द्रः पुरा राजा विश्वामित्रेण शुक्तस् १३५ तेनः पुण्य क्षिना-
शेन ब्राह्मणस्थापना ज्ञानात् यदा न क्षमते तेषां तैः स शप्तो रुषा तदा १३६ गच्छ त्वं नरके घोरं मधुनैव नराधम
इत्युक्त मात्रे वचने स्वप्नस्थः स नृपस्तदा १३७ अपश्यद्यम दूतान् वै पाश हस्तान् भयावहान् तैः संगृहीतमात्मा-
नं नीयमानं तदा बलात् १३८ पश्यति स्म नृपः खिन्नो हा तात पितरद्य मे एवं वादी स नरके तैल द्रोण्यां निपा-
तितः १३९ क्रकचैः पाट्यमानस्तु क्षुरधाराभिरप्यधः अन्धे तमसि दुःखार्त्तः पूयशोणित भोजनः ॥ १४० ॥
सप्त वर्षं मृतात्मानं मुक्तः सत्त्वे ह्यहर्निशं दिने दिने तु नरके दह्यते पच्यते ऽन्यतः १४१ खिद्यते क्षोभ्यते ऽन्यत्र मार्यते
पात्यतेन्यतः सार्यते दीप्यते ऽन्यत्र शीतवाताहतो ऽन्यतः १४२ एकं दिनं वर्ष शत प्रमाणं नरके ऽभवत्
२५ तथा वर्ष शतं तत्र आचितं नरके भटैः १४३ ततो निपातितो भूमौ विष्ठाशी श्वा व्यजायत वान्ताशी शीत दुःख पूत
मास मात्रे मृतो ऽपि सः १४४ अथापश्यत् खरं देहं हस्तिनं वानरं पशुं छागं विडालं कङ्कं च गामविं पक्षिणां कृ-
मिम् १४५ मत्स्यं कूर्मं वराहञ्च श्वाविधं कुक्कुटं शुकं शारिकां स्थावरांश्चैव सर्पं मन्यांश्च देहिनः ॥ १४६ ॥
दिवसे दिवसे जन्म प्राणिनः प्राणिनस्तदा अपश्यद् दुःख सन्तप्तो दिनं वर्ष शतं तथा १४७ एवं वर्ष शते पूर्णे गते
तत्र कुयोनिषु अपश्यच्च कदाचित् स राजा तत्स्व कुलोद्भवम् १४८ तत्र स्थितस्य तस्यापि राज्यं द्यूतेन हारितम्
भार्य्या हृता स्व पुत्रश्च स चैकाकी वनं गतः १४९ तत्रापश्यत् स सिंहं वै व्यादितास्यं भयावहम् विभक्षयिषुमाया
तं शरभेण समन्वितम् १५० पुनश्च भक्षितः सो ऽपि भार्य्यां शोचितुमुद्यतः हा शैव्य क्व गता स्याद्य मामिहापा-
स्य दुःखितं १५१ अपश्यत् पुनरेवापि भार्य्यां स्वां सह पुत्रकां त्राय स्व त्वं हरिश्चन्द्र किं द्यूतेन तव प्रभो १५२ पुत्रस्ते
مارکنڈی پوران शोच्यतां याति भार्य्या या शैव्या या सह सतां पश्यत् पुनरपि धावमानः पुनः पुनः १५३ अथापश्यत् पुनरपि स्वर्गा-
स्थः स नराधिपः नीयते मुक्त केशी सा दीना विवसना बलात् १५४ हा हा वाक्यं प्रमुञ्चन्ती त्राय स्वेत्यसकृत्त्वना

अथापश्यत् पुनस्तत्र धर्मराजस्य शासनात् १५५ आक्रन्दन्त्यत्र रिरंसया आगच्छेह नराधिप विश्वामित्रेण विज्ञप्तो-
यमो राजन् त्वदर्थिना: १५६ इत्युक्त्वा सर्प पाशैस्तु नीयते बलवद्भिसु: आह देवेन कथितं विश्वामित्रस्य चेष्टितं १५७
तत्रापि तस्य विक्रान्तिर्न धर्मो स्याप्य वर्तते एता: सर्व्वा दशास्तस्य या: स्वप्ने सम्प्रदर्शिता: १५८ सर्व्वास्तास्तेन स-
म्भुक्ता यावद्वर्षाणि द्वादश अतीते द्वादशे वर्षे नीयमानो भटैर्बलात् १५९ यमं सोऽपश्यदाकाराद्वाचच नरा-
धिपस्त विश्वामित्रस्य कोपोऽयं दुर्निवार्यो महात्मन: १६० पुत्रस्य ते मृत्यु मपि प्रदास्यति स कौशिक: गच्छ त्वं-
मानुषं लोकं दु:खशेषं च भुंक्ष्वै गतस्य तत्र राजेन्द्र श्रेयस्तव भविष्यति १६१ व्यतीते द्वादशे वर्षे दु:खस्यान्ते नरा-
धिप: अन्तरिक्षाच्च पतितो यमदूतै: प्रणोदित: १६२ पतितो यमलोकाच्च विबुद्धो भयसम्भ्रमात् अहो कष्टमिति
ध्यात्वा क्षते क्षारावसेचनं १६३ स्वप्ने दु:खं मह दृष्टं यस्यान्तो नोपलभ्यते स्वप्ने दृष्टं मया यत्तु किन्तु मे द्वादशा: समा:
१६४ गतेत्यपृच्छत्तत्रस्थान् पुक्कसां स्तु ससम्भ्रमात् नेत्यूचु:केचित्तत्रस्था एव मेवापरेऽब्रुवन् १६५ श्रुत्वा दु:खी
२८ तदा राजा देवान् शरणासीयिवान् स्वस्ति कुर्व्वन्तु मे देवा: शैव्याया बालकस्य च १६६ नमो धर्माय महते नम: कृ-
ष्णाय वेधसे प्रभवराय शुद्धाय पुराणाया व्ययाय च १६७ नमो बृहस्पते तुभ्यं नमस्ते वासवाय च एव मुक्त्वा स राजा
तु युक्त: पुक्कसकर्म्मणि १६८ शवानां मूल्य करणे पुनर्नष्टस्मृतिर्यथा मलिनो जटिल: कृष्णो लकुटी विह्वलो-
नृप: १६९ नैव पुत्रेण भार्य्या तु तस्य वै स्मृति गोचरे नष्टोत्साहो राज्यनाशाच्छ्मशाने निवसंस्तदा १७० अथाजगा-
म तत्सुतं मृत माहाय लापिनी भार्य्या तस्य नरेन्द्रस्य सर्प दष्टं हि बालकं १७१ हा वत्स हा पुत्र शिशो इत्येवं वदती मुहु:
कृशा विवर्णा विमना: पांशुध्वस्त शिरोरुहा १७२ राजपत्न्युवाच हा राजन्नाद्य बालं त्वं पश्य भौमं महीतले रम
माणं पुरा दृष्टं दष्टं दुष्टाहिना मृतं १७३ तस्या विलाप शब्दं स आकर्ण्य नराधिप: जगाम त्वरितोऽपेति भविता मृत
कम्बल: १७४ स तां रोरुदतीं भार्य्यां नास्य जानात् पार्थिव: चिर प्रवास सन्तप्तां पुनर्जातामिवावलां १७५ सापितं-
चारुकेशान्तं पुरा दृष्ट्वा जटालकं नाभ्य जानात् नृपसुता शुष्क वृक्षोपमं नृपं १७६ सोऽपि कृष्णा पटे बालं दृष्ट्वाशी-
विष पीडितं नरेन्द्र लक्षणोपेतं चिन्ता माप नरेश्वर: १७७ अहो वत्स नरेन्द्रस्य कस्यायं वै कुले शिशु: जातो नीत:

مارکنڈے پران

मा॰पु॰ कृतान्तेन कामप्याशां दुरात्मना १७८ एवं हृष्ट्वा हि मे बाले मातुरुत्सङ्गशायिनं स्मृतिमभ्यागतो बालो रोहिता-
२८ श्वोऽम्बुजलोचनः १७९ सोऽप्येतामेव मे वत्सो वयोऽवस्थामुपागतः नीतो यदि न घोरेण कृतान्तेनात्मनो वशम् १८०
राजपत्न्युवाच हा वत्स कस्य पापस्य अपध्यानादिदं महत् दुःखमापतितं घोरं यस्यान्तो नोपलभ्यते ॥ १८१ ॥
हा नाथ राजन् भवता मामनाश्वास्य दुःखितां क्वापि सन्तिष्ठता स्थाने विश्रब्धं स्थीयते कथं १८२ राज्यनाशः
सुहृत्त्यागो भार्य्यातनयविक्रयः हरिश्चन्द्रस्य राजर्षेः किं विधेन कृतं त्वया १८३ इति तस्या वचः श्रुत्वा राजा स्व-
स्थानतश्च्युतः प्रत्यभिज्ञाय दयितां पुत्रञ्च निधनं गतं १८४ कष्टं शैब्येयमेषा हि स बालोऽयमिति ब्रुवन् रुरो-
द दुःखसंतप्तो मूर्च्छामभिजगाम च १८५ सा च तं प्रत्यभिज्ञाय तामवस्थामुपागतं मूर्च्छिता निपपातार्त्ता निश्चेष्टा
धरणीतले १८६ चेतः संप्राप्य राजेन्द्रो राजपत्नी च तौ समं विलेपतुः सुसन्तप्तौ शोकभारावपीडितौ ॥ १८७ ॥
राजोवाच हा वत्स सुकुमारं ते वक्त्रं सुभ्रूनासिकालकं पश्यतो मे मुखं दीनं हृदयं किं न दीर्य्यते १८८ तात तातेति
۲۸ मधुरं ब्रुवाणं स्वयमागतं उपगुह्य कदा वक्ष्ये वत्स वत्सेति सौहृदात् १८९ कस्य जानुप्रणीतेन पिङ्गलेन क्षितिरेणुना
ममोत्तरीयमुत्सङ्गं तथाङ्गं मलमेष्यति १९० जातोऽस्य अङ्गसम्भूतो मनोहृदयनन्दनः मया कुपित्रा हा वत्स वि-
क्रीतो येन वस्तुवत् १९१ हृत्वा राज्यमशेषं मे ससाधनधनं महत् दैवाहिना नृशंसेन दष्टो मे तनयस्ततः १९२ अहं दैवा-
हिदष्टस्य पुत्रस्याननपङ्कजे निरीक्षन्नपि घोरेण विषेणान्धीकृतोऽधुना १९३ एवमुक्त्वा तमादाय बालकं बा-
ष्पगद्गदः परिष्वज्य च निश्चेष्टो मूर्च्छया निपपात ह १९४ राजपत्न्युवाच अयं स पुरुषव्याघ्रः स्वरेणैवोपलक्ष्य-
ते विद्वज्जनमनश्चन्द्रो हरिश्चन्द्रो न संशयः १९५ तथास्य नासिका तुङ्गा अग्रतोऽधोमुखं गता दन्ताश्च मुकुल-
प्रख्याः ख्यातकीर्त्तेर्महात्मनः १९६ श्मशानमागतः कस्मादद्यैष स नरेश्वरः अपहाय पुत्रशोकं सा पश्यत
पतितं पतिं १९७ प्रहृष्टा विस्मिता दीना भर्तृपुत्राधिपीडिता वीक्षन्ती सा ततोऽपश्यत् भर्तुर्दण्डं जुगुप्सितं
१९८ श्वपाकार्हं ततो मोहं जगामायतलोचना प्राप्य चेतश्च शनकैः सगद्गदमभाषत १९९ धिक्त्वा दैवाति
मार्कण्डेय पुराण करुणं निर्मर्यादं जुगुप्सितं [illegible] राज्यनाशं सुहृत्त्यागं भार्य्यातनय-

विक्रयं प्रापयित्वा पि नो मुक्तश्चण्डालो ऽयं कृतो नृपः २०१ हा राजन् जातसन्नाथामित्थं मां धरणीतलात्
उत्थाप्य नाद्य पर्य्यङ्कमारोहेति किमुच्यते २०२ नाद्य पश्यामि ते छत्रं भृङ्गारमथवा पुनः चामरं व्यजनञ्चापि को
ऽयं विधिविपर्य्ययः २०३ यस्याग्रे व्रजतः पूर्वं राजानो भृत्यतां गताः स्वोत्तरीयैः कुर्व्वन्ति नीरजस्कं महीतलं २०४
सोऽयं कपालसंलग्नघटीघटनिरन्तरे मृतनिर्माल्यसूत्रान्तर्गूढकेशे सुदारुणे २०५ वसानिस्यन्दसंशुष्कम-
हीपुटकमण्डिते भस्माङ्गारार्द्धदग्धास्थिमज्जसंघट्टभीषणे २०६ गृध्रगोमायुनादार्त्तनष्टक्षुद्रविहङ्गमे
चिताधूमाततिकृतनीलीकृतदिगन्तरे २०७ कुणपास्वादनमुदासंप्रहृष्टनिशाचरे चरस्यमेध्ये राजेन्द्र श्मशाने
दुःखपीडितः २०८ एवमुक्त्वा समाश्लिष्य कण्ठे राज्ञो नृपात्मजा कष्टशोकशताधारा विललापार्त्तया गिरा
२०९ राजपत्न्युवाच राजन् स्वप्नो ऽथ तथ्यं वा यदेतन्मन्यते भवान् तत् कथ्यतां महाभाग मनो वै मुह्यते मम २१०
यद्येतदेवं धर्म्मज्ञ नास्ति धर्म्मे सहायता तथैव विप्रदेवादिपूजने पालने भुवः २११ नास्ति धर्म्मः कुतः सत्यमा-
४१ र्जवं चानृशंसता यत्र त्वं धर्म्मपरमः स्वराज्यादवरोपितः २१२ इति तस्या वचः श्रुत्वा निःश्वस्योष्णं सगद्गदं
कथयामास तन्वङ्ग्या यथा प्राप्तः श्वपाकता २१३ रुदित्वा सापि सुचिरं निःश्वस्योष्णञ्च दुःखिता स्वपुत्र-
मरणं भीरुर्यथावृत्तं न्यवेदयत् २१४ राजोवाच प्रिये न रोचये दीर्घं कालं क्लेशमुपासितुम् नात्मायत्तश्च तन्वङ्गि
पश्य मे मन्दभाग्यतां २१५ चाण्डालेनाननुज्ञातः प्रवेक्ष्ये ज्वलनं यदि चाण्डालदासतां यास्ये पुनरप्यन्यजन्मनि
२१६ नरके च पतिष्यामि कीटकः कृमिभोजनः वैतरण्यां महापूयवसासृक्स्नायुपिच्छिले २१७ असिपत्र-
वने प्राप्य च्छेदं प्राप्स्यामि दारुणं तापं प्राप्स्यामि वा प्राप्य महारौरवरौरवौ २१८ मग्नस्य दुःखजलधौ पारः
प्राणवियोजनं एको ऽपि बालको यो ऽयमासीद्वंशकरः सुतः २१९ मम दैवाम्बुवेगेन मग्नः सो ऽपि बलीयसा
कथं प्राणान् विमुञ्चामि परायत्तो ऽस्मि दुर्गतः २२० अथवा नार्त्तिनाल्कि शोनरः पापमवेक्षते तिर्य्यक्त्वे नास्ति तत्
दुःखं नासिपत्रवने तथा २२१ वैतरण्यां कुतस्तादृग्यादृशं पुत्रविप्लवे सो ऽहं सुतशरीरेण दीप्यमाने हुताशने ॥
مارکنڈی پوران २२२ निपतिष्यामि तन्वङ्गि क्षन्तव्यं कुकृतं मम अनुज्ञाता च गच्छ त्वं विप्रवेश्म शुचिस्मिते २२३ मम वाक्यञ्च त-

न्वङ्गि निवोध हतमानसा यदि दत्तं यदि हुतं गुरवो यदि तोषिता: २२४ परत्र सङ्गमो भूयात् पुत्रेण सह चत्वया इह
लोके कुतस्त्वेतद्भविष्यति ममेङ्गितम् २२५ त्वया सह मम श्रेयोगमनं पुत्र मार्गतो यन्मया हसता किञ्चिद्रहस्य
वा शुचिस्मिते २२६ अश्लीलमुक्तं तत्सर्वं क्षन्तव्यं मम याचतः राजपत्नीति गर्वेण नावज्ञेयः स तेद्विजः सर्व्व
यत्नेन ते तोष्यः स्वामिदैवतवच्छुभे २२७ राजपत्न्युवाच अहमप्यत्र राजर्षे दीप्यमाने हुताशने दुःखभारासहा
द्यैव सह यास्यामि वै त्वया २२८ पक्षिण ऊचुः ततः कृत्वा चितां राजा आरोप्य तनयं स्वकं भार्य्यया सहितश्च
सैव बद्धाञ्जलिपुटस्तदा २२९ चिन्तयन् परमात्मानमीशं नारायणं हरिं हृत्कोटरगुहासीनं वासुदेवं सुरेश्वरं अना-
दिनिधनं ब्रह्म कृष्णं पीताम्बरं शुभं २३० तस्य चिन्तयमानस्य सर्वे देवाः सवासवाः धर्म्मं प्रमुखतः कृत्वा समाजग्मु-
स्त्वरान्विताः २३१ आगत्य सर्व्वे प्रोचुस्ते भो भो राजन् शृणु प्रभो अयं पितामहः साक्षाद्धर्म्मश्च भगवान्स्वयं २३२॥
साध्याश्च विश्वे मरुतो लोकपालाः सवाहनाः नागाः सिद्धाः सगन्धर्व्वा रुद्राश्चैव तथाश्विनौ २३३ एते चान्ये च बह-
वो विश्वामित्रस्तथैव च विश्वत्रयेण यो मित्रं कर्त्तुं न शकितः पुरा २३४ विश्वामित्रस्तु ते मैत्रीमिष्टञ्चाहर्त्तुमिच्छति
आरोह तत्र धर्म्मः शक्रोऽथ गाधिजः २३५ धर्म्म उवाच मा राजन् साहसं कार्षीर्धर्म्मोऽहं त्वामुपागतः तिति-
क्षादमसत्याद्यैः स्वगुणैः परितोषितः २३६ इन्द्र उवाच हरिश्चन्द्र महाभाग प्राप्तः शक्रोऽस्मि तेऽन्तिके त्वया-
सभार्य्यपुत्रेण जिता लोकाः सनातनाः २३७ आरोह त्रिदिवं राजन् भार्य्यापुत्रसमन्वितः सुदुष्प्रापं नरैरन्यैर्जितमा-
त्मीयकर्म्मभिः २३८ पक्षिण ऊचुः ततोऽमृतमयं वर्षमपमृत्युविनाशनं इन्द्रः प्रास्रजदाकाशाच्चितास्थानगतः
प्रभुः २३९ पुष्पवर्षञ्च सुमहद्देवदुन्दुभिनिस्वनं तत्र तस्मिन्वर्त्तमाने समाजे देवसंकुले २४० समुत्तस्थौ ततः पुत्रो रा-
जस्तस्य महात्मनः सुकुमारतनुः सुस्थः प्रसन्नेन्द्रियमानसः २४१ ततो राजा हरिश्चन्द्रः परिष्वज्य सुतं क्षणात् सभा-
र्य्यः स्वश्रिया युक्तो दिव्यमाल्याम्बरान्वितः २४२ सुस्थः सम्पूर्णहृदयो मुदा परमया युतः बभूव तत्क्षणादिन्द्रो
भूयश्चैनमभाषत २४३ सभार्य्यस्त्वं सपुत्रश्च प्राप्स्यसे सद्गतिं परां समारोह महाभाग निजानां कर्म्मणां फलैः २४४
हरिश्चन्द्र उवाच देवराजाननुज्ञातः स्वामिना श्वपचेन वै अकृत्वा निष्कृतिं तस्य नारोक्ष्येऽहं सुरालयं २४५ धर्म्म उवाच॥



۳۰

مارکنڈی پوران

मा॰पु॰ तवैनं भाविनं क्लेशमवगम्यात्ममायया आत्मा श्वपाकतां नीतो दर्शितं तच्च चापलं २४६ इन्द्र उवाच प्रार्थ्यं ते यत्।
३१ परं स्थानं समस्तैर्मनुजैर्भुवि तदारोह हरिश्चन्द्र स्थानं पुण्यकृतां नृणां २४७ हरिश्चन्द्र उवाच देवराज नमस्तुभ्यं।
वाक्यञ्चैतन्निबोध मे प्रसादसुमुखं यत्वां ब्रवीमि प्रश्रयान्वितः २४८ मच्छोकमग्नमनसः कोशलानगरे जनाः ति-
ष्ठन्ति तानपोह्याद्य कथं यास्याम्यहं दिवं २४९ ब्रह्महत्या गुरोर्घातो गोवधः स्त्रीवधस्तथा तुल्यमेभिर्महापापं भक्त
त्यागेऽप्युदाहृतं २५० भजन्तं भक्तमत्याज्यमदुष्टं त्यजतः सुखं नेह नामुत्र पश्यामि तस्माच्छक्र दिवं व्रज॥ २५१॥
यदि ते सहिताः स्वर्गं मया यान्ति सुरेश्वर ततोहमपि यास्यामि नरकं वापि तैः सह २५२ इन्द्र उवाच बहूनि पुण्य।
पापानि तेषां भिन्नानि वै पृथक् कथं संघातभोग्यं त्वं भूयः स्वर्गमवाप्स्यसि २५३ हरिश्चन्द्र उवाच शक्र भुङ्क्ते नृपो
राज्यं प्रभावेण कुटुम्बिनां यजते च महायज्ञैः कर्म्म पौर्तं करोति च २५४ तच्च तेषां प्रभावेण मया सर्व्वमनुष्ठितं ॥
उपकर्त्तॄन्न सन्त्यक्ष्ये तानहं स्वर्गलिप्सया २५५ तस्माद्यन्मम देवेश किञ्चिदस्ति सुचेष्टितं दत्तमिष्टमथो जप्तं सामा-
۳۱ न्यं तैस्तदस्तु नः २५६ बहुकालोपभोग्यं हि फलं यन्मम कर्म्मणः तदस्तु दिनमप्येकं तैः समं त्वत्प्रसादतः ॥ २५७॥
पक्षिण ऊचुः एवं भविष्यतीत्युक्त्वा शक्रस्त्रिभुवनेश्वरः प्रसन्नचेता धर्म्मश्च विश्वामित्रश्च गाधिजः ॥ २५८॥
विमानकोटिसम्बद्धं स्वर्गलोकान्महीतलं गत्वायोध्याजनं प्राह दिवमारुह्यतामिति २५९ तदिन्द्रस्य वचः।
श्रुत्वा प्रीत्या तस्य च भूपतेः आनीय रोहितास्यञ्च विश्वामित्रो महातपाः २६० अयोध्याख्ये पुरे रम्ये सोऽभ्यषिञ्च
न्नृपात्मजं देवैश्च मुनिभिः सिद्धैरभिषिच्य नराधिपं २६१ राज्ञा सह तदा सर्व्वे हृष्टपुष्टसुहृज्जनाः सपुत्रभृत्यदा-
रास्ते दिवमारुरुहुर्जनाः २६२ पदे पदे विमानात्ते विमानमगमन्नराः तदा सम्भूतहर्षोऽसौ हरिश्चन्द्रश्च पार्थिवः
२६३ सम्प्राप्य भूतिमतुलां विमानैः स महीपतिः आसाञ्चक्रे पुराकारे वप्रप्राकारसंवृते २६४ ततस्तस्यर्द्धिमालो-
क्य श्लोकं तत्रोशना जगौ दैत्याचार्यो महाभागः सर्व्वशास्त्रार्थतत्ववित् २६५ शुक्र उवाच हरिश्चन्द्रसमो राजा न
भूतो न भविष्यति यः शृणोति स्वदुःखार्त्तः स सुखं महदाप्नुयात् २६६ स्वर्गार्थी प्राप्नुयात् स्वर्गं पुत्रार्थी पुत्रमाप्नु-
مارکنڈی پوران यात् भार्य्यार्थी प्राप्नुयाद्भार्य्यां राज्यार्थी राज्यमाप्नुयात् २६७ अहो तितिक्षामाहात्म्यमहो दानफलं महत् यदा

गतो हरिश्चन्द्रः पुरीन्देन्द्रस्य मामवान् २६८ पक्षिण ऊचुः एतत्ते सर्व्वमाख्यातं हरिश्चन्द्र विचेष्टितं अतः परं कथा
शेषः श्रूयतां मुनिसत्तम २६९ विपाको राजसूयस्य पृथिवीक्षयकारणं तन्निमित्तञ्च युद्धमाडिबकं महत् ॥
२७० इति मार्कण्डेय पुराणे हरिश्चन्द्रोपाख्यानं ८ पक्षिण ऊचुः राज्यच्युते हरिश्चन्द्रे गते च त्रिदशालयं निश्च
क्राम महातेजा जलवासात् पुरोहितः १ वशिष्ठो द्वादशाब्दान्ते गङ्गापर्य्युषितो मुनिः शुश्राव च समस्तन्तु विश्वा-
मित्र विचेष्टितं २ हरिश्चन्द्रस्य नाशञ्च राज्ञश्चोदारकर्म्मणः चाण्डालसंप्रयोगञ्च भार्य्यातनयविक्रयं ॥ ३ ॥स
श्रुत्वा सुमहाभागः प्रीतिमानवनीपतौ चकार कोपं तेजस्वी विश्वामित्रमृषिं प्रति ४ वशिष्ठ उवाच मम पुत्रशतं
तेन विश्वामित्रेण घातितं तत्रापि नाभवत्कोपो यस्तादृशो ममाद्याऽभवत् ५ श्रुत्वा नराधिपमिमं स्वराज्यादवरोपितं महा-
त्मानं महाभागं देवब्राह्मणपूजकं ६ यस्मात् सत्यव्रतं शान्तं शत्रावपि विमत्सरं अनागसं चैव धर्म्मात्मानमप्र
मत्तं मदाश्रयं ७ सपत्नीभृत्यपुत्रन्तु प्रापितोऽन्त्यां दशां नृपः स राज्याच्च्यावितो तेन बहुशश्च खिलीकृतः ८
۳۲ तस्माद्दुरात्मा ब्रह्मद्विट् प्राज्ञानामवरोपितः मच्छापोपहतो मूढः स बकत्वमवाप्स्यति ९ पक्षिण ऊचुः श्रुत्वा शापं म
हातेजा विश्वामित्रोऽपि कौशिकः त्वमप्याडिर्भवस्वेति प्रतिशापमयच्छत १० अन्योन्यशापात्तौ प्राप्तौ तिर्य्यक्त्वं पर-
मद्युती वशिष्ठः स महातेजा विश्वामित्रश्च कौशिकः ११ अन्यजातिसमायोगं गतावप्यमितौजसौ युयुधातेऽति
संरब्धौ महाबलपराक्रमौ १२ योजनानां सहस्रे द्वे प्रमाणेनाडिरुच्छ्रितः बकस्त्वधिकं ब्रह्मन् सहस्रत्रितयं वकः १३
तौ तु पक्षप्रहाराभ्यामन्योन्यस्योरुविक्रमौ प्रहरन्तौ भयं तीव्रं प्रजानाञ्चक्रतुस्तदा १४ विधूय पक्षाविबको रक्तोद्वृत्ता
क्षिराहनत् आडिं सोऽप्युन्नतग्रीवो बकं पद्भ्यामताडयत् १५ तयोः पक्षानिलाघाताः प्रपेतुर्गिरयो भुवि गिरिप्रपाता
भिहता चकम्पे च वसुन्धरा १६ सा कम्पमाना जलधीनुद्वृत्तांश्चक्र एव च ननाम चैकपार्श्वेन पातालगमनोन्मुखी ॥
१७ केचिद्गिरिनिपातेन केचित्तस्याब्धिवारिणा केचिन्महीसञ्चलनात् प्रययुः प्राणिनः क्षयं १८ इति सर्व्वं परित्र-
स्तं हाहाभूतमचेतनं जगदासीत्तु सम्भ्रान्तं पर्य्यस्त क्षितिमण्डलं १९ हा वत्स हा कान्त शिशो प्रयाह्येषोऽस्मि सं-
मارکنڈی پوران स्थितः हा प्रिये कान्त शैलोऽयं पतत्याशु पलायतां २० इत्याकुलीकृते लोके सन्त्रासविमुखे तदा सुरैः परिवृतः सर्व्वै

मा॰पु॰ शृणु तात यथा वृत्तं ममेदं सुखदुःखदं यज्ञाहमासमन्यस्मिन् जन्मन्यस्मत्परन्तु यत् ३५ अहमासम्पुरा विप्रो न्यस्ता
३५ त्मा परमात्मनि आत्मविद्या विचारेषु परां निष्ठामुपागतः ३६ सततं योगयुक्तस्य सतताभ्याससंगमात् सत्संयोगा-
त्स्वस्वभावाद् विचारविधिशोधनात् ३७ तस्मिन्नेव परः प्रीतिर्मे सात्तात् सुज्जनः सदा आचार्यतां च सम्प्राप्तः
शिष्यसन्देहहृत्तमः ३८ ततः कालेन महता स कान्तिकमुपागतः अज्ञानात्तु सखा तो विपन्नश्च प्रमादतः ३९
उत्क्रान्तिकालादारभ्य स्मृतिलोपो न मेऽभवत् यावद्वर्षं तत्स्वैव जन्मना स्मृतिमागता ४० पूर्वाभ्यासेन तेनैव सोऽहं॰
तात जितेन्द्रियः यतिष्यामि तथा कर्तुं न मे विघ्ने यथा पुनः ४१ ज्ञानदानफलं ह्येतद्यज्जातिस्मरता मम नह्येतत्प्रा-
प्यते तात त्रयीधर्माश्रितैर्नरैः ४२ सोऽहं पूर्वाश्रमादेव निष्ठाधर्ममुपाश्रितः एकान्तित्वमुपागम्य यतिष्याम्यात्म
मोक्षणे ४३ तद्ब्रूहि त्वं महाभाग यत्ते सांशयिकं हृदि स तावता पितः प्रीतिमुत्पाद्यानृण्यमाप्नुयां ४४ पक्षिण॰
ऊचुः पितामहस्ततः पुत्रं श्रद्दधानस्य तद्वचः भवता यद्वयं पृष्टाः संसारगहनाश्रयं ४५ पुत्र उवाच शृणु तात यथा
३८ तत्त्वमनुभूतं मयाऽसकृत् संसारचक्रमजरं स्थितिर्यस्य न विद्यते ४६ सोऽहं वदामि ते सर्वं तवैवानुप्रयाचितः॰
उत्क्रान्तिकालादारभ्य यथा नान्यो विदिष्यति ४७ उष्मा प्रकुपितः काये तीव्रवायुसमीरितः भिनत्ति मर्मस्थानानि
दीप्यमानो निरिन्धनः ४८ उदानो नाम पवनस्ततश्चोर्ध्वं प्रवर्त्तते भुक्तानामम्बुभक्ष्याणामधोगतिनिरोधकृत् ४९
ततो येनाम्बुदानानि कृतान्यन्नरसास्तथा दत्ताः स तस्यामाह्लादमापदि प्रतिपद्यते ५० अन्नानि येन दत्तानि श्रद्धा
पूतेन चेतसा सोऽपि तृप्तिमवाप्नोति विनाप्यन्नेनैव तदा ५१ येनानृतानि नोक्तानि प्रीतिभेदः कृतो न च आस्तिकः
श्रद्दधानश्च स सुखं मृत्युमृच्छति ५२ देवब्राह्मणपूजायां ये रता नानसूयकाः शुक्ला वदान्या ह्रीमन्तस्ते नराः सुख
मृत्यवः ५३ यो न कामान्न संरम्भान्न द्वेषाद्धर्ममुत्सृजेत् यथोक्तकारी सौम्यश्च स सुखं मृत्युमृच्छति ॥ ५४ ॥
श्च वारिदायिनो दाहं सुधाच्छायान्नदायिनः प्राप्नुवन्ति नराः काले तस्मिन्मृत्यावुपस्थिते ५५ शीतं जयन्तीन्धनदा-
स्तापं चन्दनदायिनः प्राणघ्नीं वेदनां कष्टां ये चानुद्वेगकारिणः ५६ मोहाज्ञानप्रदातारः प्राप्नुवन्ति महद्भयं वेद
مارکنڈی پران नाभिरुग्राभिः प्रपीड्यन्तेऽधमा नराः ५७ कूटसाक्षी मृषावादी यश्चासद्गुरु शास्ति वै ते मोहमृत्यवः सर्वे तथा॰

वेद विनिन्दकाः ५८ विभीषणाः पूतिगन्धाः कूटमुद्गरपाणयः आगच्छन्ति दुरात्मानो यमस्य पुरुषास्तदा ॥ ५९ ॥
प्राप्तेषु दृक्पथं तेषु जायते तस्य वेपथुः क्रन्दत्यविरतं सोऽथ भ्रातृमातृसुतानथ ६० सा तस्य वागस्फुटा तात एकव-
र्णा विभाव्यते दृष्टिश्च भ्राम्यते त्रासाच्छ्वासाच्छुष्यत्यथाननं ६१ ऊर्ध्वश्वासान्वितः सोऽथ दृष्टिभङ्गसमन्वितः
ततः सवेदनाविष्टस्तच्छरीरं विमुञ्चति ६२ वाय्वग्रसारी तद्रूपं देहमन्यत् प्रपद्यते तत्कर्मजं यातनार्थं न मातृपितृ
सम्भवं तत्प्रमाणा वयोवस्था संस्थानैः प्राग्भवं यथा ६३ ततो दूतो यमस्याशु पाशैर्बध्नाति दारुणैः दण्डप्रहार-
सम्भ्रान्तं कर्षते दक्षिणां दिशं ६४ कुशाकण्टकवल्मीकशङ्कुपाषाणकर्कशे तथा प्रदीप्तज्वलने क्वचिच्छ्वभ्र-
शतोत्कटे ६५ प्रदीप्तादित्यतप्ते च दह्यमानं तदंशुभिः कृष्यते यमदूतैश्च शिवसन्नादभीषणैः ६६ विकृष्यमा-
णस्तैर्घोरैर्भक्ष्यमाणः शिवाशतैः प्रयाति दारुणे मार्गे पापकर्मा यमक्षयं ६७ छत्रोपानत्प्रदातारो ये च वस्त्रप्र-
दा नराः ते यान्ति मनुजा मार्गे तं सुखेन तथान्नदाः ६८ एवं क्लेशाननुभवन्नवशः पापपीडितः नीयते द्वादशाहेन
३५ धर्मराजपुरं नरः ६९ काले वरे दह्यमाने महान्तं दाहमृच्छति ताड्यमाने तथैवार्तिं छिद्यमाने च दारुणां ॥ ७० ॥
क्लिद्यमाने चिरतरं जन्तुर्दुःखमवाप्नुते स्वेनकर्मविपाकेन देहान्तरगतोऽपि सन् ७१ तत्र यद्बान्धवास्तोयं प्रयच्छन्ति
तिलैः सह यच्च पिण्डं प्रयच्छन्ति नीयमानस्तदश्नुते ७२ तैलाभ्यङ्गो बान्धवानामङ्गसंवाहनं च यत् तेन चाप्याय्यते
जन्तुर्यच्चाश्नन्ति स बान्धवाः ७३ भूमौ स्वपद्भिर्नात्यन्तं क्लेशमाप्नोति बान्धवैः दानं ददद्भिश्च तथा जन्तुराप्याय्यते मृतः
७४ नीयमानः स्वकं गेहं द्वादशाहं स पश्यति उपभुङ्क्ते तथा दत्तं तोयपिण्डादिकं भुवि ७५ द्वादशाहात्परं घोरमाच
संभीषणाकृतिं याम्यं पश्यत्यथो जन्तुः कृष्यमाणः पुरं ततः ७६ गतमात्रोऽतिरक्ताक्षं भिन्नाञ्जनचयप्रभं ॥ मृ-
त्युकालान्तकादीनां मध्ये पश्यति वै यमं ७७ दंष्ट्राकरालवदनं भ्रुकुटीदारुणाकृतिं विरूपैर्भीषणैर्वक्त्रैर्वृतं व्या-
धिशतैः प्रभुं ७८ दण्डासक्तं महाबाहुं पाशहस्तं सुभैरवं तन्निर्दिष्टां ततो याति गतिं जन्तुः शुभाशुभां ॥ ७९ ॥
रौरवे कूटसाक्षी तु याति यश्चानृतो नरः तस्य स्वरूपं गदतो रौरवस्य निशामय ८० योजनानां सहस्रे द्वे रौरवो हि
मार्कंडे पुरान प्रमाणतः जानुमात्रप्रमाणश्च ततः श्वभ्रः सुदुस्तरः ८१ तत्राङ्गारचयोपेतः कृतश्च धरणीसमः जाज्वल्य-

मा॰ पु॰ मानस्त्री क्षेत्रात्तापिताङ्गनरभूमिना ८२ तन्मध्ये पापकर्म्माणो विमुञ्चन्ति यमानुगाः सदह्यमानास्तीक्ष्णाग्नि-
३७ नातत्र धावति ८३ पदे पदे च पादोऽस्य शीर्य्यते जीर्य्यते पुनः अहोरात्रेणोद्धरणं धावन्यासेचगच्छति ८४ एवंसहस्र
मुत्तीर्णो योजनानां विमुच्यते ततोऽन्यं पापशुद्ध्यर्थं तादृङ्निरयमृच्छति ८५ ततः सर्वेषु निस्तीर्णः पापी तिर्य्यक्त्व
मश्नुते कृमि कीट पतङ्गेषु श्वापदे मशकादिषु ८६ गत्वा गजद्रुमाद्येषु गोष्वश्वेषु तथैव च अन्यासु चैव पापासु
दुःखदासु च योनिषु ८७ मानुष्यं प्राप्य कुब्जो वा कुत्सितो वामनोऽपि वा चण्डालपुक्कसाद्यासु नरो योनिषु जायते
८८ अवशिष्टेन पापेन पुण्येन च समन्वितः ततश्चारोहणीं जातिं शूद्रवैश्यनृपादिकां ८९ विप्रदेवेन्द्रतां चा-
पि कदाचिच्चारोहणीं एवन्तु पापकर्म्माणो नरकेषु पतन्त्यधः ९० यथा पुण्यकृतो यान्ति तन्मे निगदतः शृणु
ते यमेन विनिर्दिष्टां यान्ति पुण्यां गतिं नराः ९१ प्रगीतगन्धर्वगणाः प्रनृत्याप्सरसां गणाः हारनूपुरमाधुर्य्यशोभितान्य
मुत्तमानि च ९२ प्रयान्त्याशु विमानानि नानाविधस्वलङ्कृताः तस्माच्च प्रच्युता राज्ञामन्येषाञ्च महात्मनां ९३ जाय-
३८ न्ते च कुले तत्र सद्वृत्तपरिपालकाः भोगान्सम्प्राप्नुवन्त्युच्चैस्ततो यान्त्यूर्ध्वमन्यथा ९४ अवरोहणीं च सम्प्राप्य पूर्ववद्या-
न्ति मानवाः एतत्ते सर्वमाख्यातं यथा जन्तुर्विपद्यते अतः शृणुष्व विप्रर्षे यथा गर्भं प्रपद्यते ९५ इति मार्कण्डेय
पुराणे पितापुत्रसंवादे १० पुत्र उवाच निषेकं मानवं स्त्रीणां बीजं प्राप्तं [illegible] विमुक्तमात्रो नरकात्स्वर्गाद्वा-
पि प्रपद्यते १ तेनाभिभूतं तत्स्थैर्य्यं याति बीजद्वयं पितः कललत्वं बुद्बुदत्वं ततः पेशित्वमेव च २ पेश्यां यथाणु
बीजं स्यादङ्कुरस्तद्वदुच्यते अङ्गानां च तथोत्पत्तिः पञ्चानामनुभागशः ३ उपाङ्गान्यङ्गुलीनेत्रनासास्यश्रवणा-
नि च प्ररोहं यान्ति चाङ्गेभ्यस्तद्वत्तेभ्यो नखादिकं ४ त्वचि रोमाणि जायन्ते केशाश्चैव ततः परं समं समृद्धिमायाति
तेन वोद्भवकोशकं ५ नारिकेलफलं यद्वत्सकोशं वृद्धिमृच्छति तद्वत्प्रयात्यसौ वृद्धिं सकोशोऽधोमुखः स्थितः
६ तले तु जानुपार्श्वाभ्यां करौ न्यस्य स वर्द्धते अङ्गुष्ठौ चोपरिन्यस्तौ जान्वोरग्रे तथाङ्गुली ७ जानुपृष्ठे तथा नेत्रे जानु-
मध्ये च नासिका स्फिचौ पार्ष्णिद्वयस्थे च बाहू जङ्घे बहिः स्थिते ८ एवं वृद्धिं क्रमाद्याति जन्तुः स्त्रीगर्भसंस्थितः ॥
مارکنڈے پوران अन्यसत्त्वोदरे जन्तोर्यथा रूपं तथा स्थितिः ९ काठिन्यमग्निना याति भुक्तपीतेन जीवति पुण्यापुण्याश्रयमयी स्थि-

त्तिर्जन्तोस्तथोदरे १० नाडी चाप्यायनी नाम नाभ्यां तस्य निबध्यते स्त्रीणां तथान्त्रसुषिरे सानिवद्धोपजायते ११
क्रामन्ति भुक्तपीतानि स्त्रीणां गर्भोदरे यथा तैराप्यायितदेहोऽसौजन्तुर्वृद्धिमुपैतिवै १२ स्मृतीस्तस्य प्रयान्त्य-
स्यवह्वी: संसार भूमय: ततोनिर्वेदमायाति पीड्यमान इतस्तत: १३ पुनर्नैवं करिष्यामि मुक्तमात्र इहोदरात्
तथा तथाय तिष्यामि गर्भं नाप्स्यास्यहं यथा १४ इति चिन्तयते स्मृत्वा जन्मदु:खशतानिवै यानि पूर्वानुभूतानि
दैव भूतानि यानिवै १५ तत: कालक्रमाज्जन्तु: परिवर्त्तत्यधोमुख: नवमे दशमे वापि मासि सञ्जायते यत: १६
निष्क्राम्यमाणो वातेन प्राजापत्येन पीड्यते निष्क्राम्यते च विलपन् हृदि दु:खनिपीडित: १७ निष्क्रान्तश्चोदरा-
न्मूर्च्छामसह्यां प्रतिपद्यते प्राप्नोति चेतनां चासौ वायुस्पर्शसमन्वित: १८ ततस्तं वैष्णवी माया समास्कन्दति
मोहिनी तया विमोहितात्मासौ ज्ञानभ्रंशमवाप्नुते १९ भ्रष्टज्ञानो बालभावं ततो जन्तु: प्रपद्यते तत: कौ-
मारकावस्थां यौवनं वृद्धतामपि २० पुनश्च मरणं तद्वज्जन्म चाप्नोति मानव: तत: संसारचक्रेऽस्मिन् भ्राम्यते
٣٨ घटियन्त्रवत् २१ कदाचित्स्वर्गमाप्नोति कदाचिन्निरयं नर: नरकञ्चैव स्वर्गञ्च कदाचिच्च मृतोऽश्नुते ॥ २२ ॥
कदाचिदत्रैव पुनर्जात: स्वंकर्म सोऽश्नुते कदाचिद्भुक्तकर्मा च मृत: स्वल्पेन गच्छति २३ कदाचिदल्पशेषेण न-
रो जायते ऽत्र शुभाशुभै: स्वर्लोके नरके चैव भुक्तप्रायो द्विजोत्तम २४ नरकेषु महद्दु:खमेतद्यत्स्वर्गवासिन:
दृश्यन्ते तात मोदन्ते पात्यमानाश्च नारका २५ स्वर्गेऽपि दु:खमतुलं यदारोहणकालत: प्रभृत्यहं पतिष्यामी-
त्येतन्मनसि वर्तते २६ नारकांश्चैव संप्रेक्ष्य महद्दु:खमवाप्यते एतां गतिमहं गन्तेत्यहर्निशमनिर्वृत: ॥ २७ ॥
गर्भवासे महद्दु:खं जायमानस्य योनित: जातस्य बालभावे च वृद्धत्वे दु:खमेव च २८ कामेर्ष्याक्रोधसम्बन्धं
यौवने चातिदु:सहं दु:खप्राया वृद्धता च मरणे दु:खमुत्तमं २९ कृष्यमाणस्य याम्यैश्च नरकेषु च यात्यत: ॥
पुनश्च गर्भो जन्माथ मरणं नरकस्तथा ३० एवं संसारचक्रेऽस्मिन् जन्तवो घटियन्त्रवत् भ्राम्यन्ते प्राकृतैर्बन्धै-
र्बध्वा बध्यन्ति चासकृत् ३१ नास्ति तात सुखं किञ्चिदत्र दु:खशताकुले तस्मान्मोक्षाय यतता कथं सेव्या म-
यात्रयी ३२ इति मार्कण्डेयपुराणे पितापुत्रसंवादे ११ पितोवाच साधुवत्सत्वयाख्यातं संसारगहनं परं ॥

(मार्क)

مارکنڈے پوران

ज्ञान प्रदान सम्भूतं समाश्रित्य महा फलं १ तत्र ते नरकाः सर्व्वे यथा वै रौरवस्तथा वर्णितांस्तान् समाचक्ष्व विस्तरे-
ण महामते २ पुत्र उवाच रौरवस्ते समाख्यातः प्रथमं नरको मया महारौरव सञ्ज्ञन्तु शृणुष्व नरकं पितः ॥३॥
योजनानां सहस्राणि सप्त पञ्च समन्ततः तत्र ताम्रमयी भूमिरधस्तस्य हुताशनः ४ तत्तापतप्ता सर्व्वा सा प्रोद्यदिन्दु
समप्रभा विभात्यति महा रौद्रा दर्शनस्पर्शनादिषु ५ तस्यां बद्धः कराभ्याञ्च पद्भ्याञ्चैव यमानुगैः मुच्यते पाप-
कृन्मध्ये लुठमानः स गच्छति ६ काकैर्बकैर्वृकोलूकैर्वृश्चिकैर्मशकैस्तथा भक्ष्यमाणस्तथा गृध्रैर्द्रुतं मार्गे-
विकृष्यते ७ दह्यमानः पितर्मातर्भ्रातस्तातेति चाकुलः वदत्यसकृदुद्विग्नो न शान्तिमधिगच्छति ८ एवं तस्मान्न-
रैर्मोक्षो ह्यतिक्रान्तैरवाप्यते वर्षायुतायुतैः पापं यैः कृतं दुष्टबुद्धिभिः ९ तथान्यस्तु तमो नाम सोऽतिशीतः स्व-
भावतः महारौरववद्दीर्घस्तथा सतमसा वृतः १० शीतार्त्तास्तत्र धावन्तो नरास्तमसि दारुणे परस्परं समासाद्य
परिरभ्याश्रयन्ति च ११ दन्तास्तेषाञ्च भज्यन्ते शीतार्त्ति परिकम्पिताः क्षुत्तृषा प्रबलास्तत्र तथैवान्येऽप्युपद्र-
۳۹ वाः १२ हिमखण्डवहो वायुर्भिनत्त्यस्थीनि दारुणः मज्जासृग्गलितं तस्मादश्नुवन्ति क्षुधान्विताः १३ लेलि-
ह्यमाना भ्राम्यन्ते परस्पर समागमे एवं तत्रापि सुमहान् क्लेशस्तमसि मानवैः १४ प्राप्यते ब्राह्मणश्रेष्ठ यावद्दु-
ष्कृत संक्षयः निकृन्तन इति ख्यातस्ततोऽन्यो नरकोत्तमः १५ तस्मिन् कुलालचक्राणि भ्राम्यन्त्यविरतं पितः
तेषु रोप्य निकृत्यन्ते कालसूत्रेण मानवाः १६ यमानुगाङ्गुलिस्थेन आपादतलमस्तकम् न चैषां जीवितभ्रंशो
जायते द्विजसत्तम १७ छिन्नानि तेषां शतशः खण्डान्यैक्यं व्रजन्ति च एवं वर्षसहस्राणि छिद्यन्ते पापकर्म्मिणः
१८ तावद्यावदशेषं वै तत्पापं हि क्षयं गतं अप्रतिष्ठञ्च नरकं शृणुष्व गदतो मम १९ यत्रस्थैर्नारकैर्दुःखमसह्य-
मनुभूयते तान्येव तत्र चक्राणि घटीयन्त्राणि चान्यतः २० दुःखस्य हेतुभूतानि पापकर्म्मकृतां नृणां चक्रेष्वा-
रोपिताः केचिद्भ्राम्यन्ते तत्र मानवाः २१ यावद्वर्षसहस्राणि न तेषां स्थितिरन्तरा घटीयन्त्रेषु चैवान्ये बद्धस्तोये-
مارکنڈی यथा घटी २२ भ्राम्यन्ते मानवा रक्तमुद्गिरन्तः पुनः पुनः अन्त्रैर्मुखविनिष्क्रान्तैर्नेत्रैरश्रुविलम्बिभिः २३ दुःखानि ते
प्राप्नुवन्ति यान्यसह्यानि जन्तुभिः असिपत्रवनं नाम नरकं शृणु चापरं २४ योजनानां सहस्रं यो ज्वलदग्न्यास्तृतावनिः

मा. पु. तप्ताः सूर्यकरैरुग्रसंघैर्यान्तीव दुःखतः २५ प्रयान्ति यत्र तत्र प्राणिनो नरकौकसः तन्मध्ये च वनं रम्यं स्निग्ध-
५० पत्रं विभाव्यते २६ पक्वानि तत्र खड्गानां फलानि द्विजसत्तम श्वानश्च तत्र बलवाः खनन्त्यग्रुत भीषणाः २७
महावक्त्रा महादंष्ट्रा व्याघ्रा इव भयानकाः ततस्तद्वनमालोक्य शिशिरच्छायमग्रतः २८ प्रयान्ति प्राणिनस्त-
त्रातीव्रतृट्परिपीडिताः हा मातर्हा तात इति क्रन्दन्तोऽतीव दुःखिताः २९ दह्यमानाङ्घ्रियुगला धरणीस्थेन
वह्निना तेषां गतानां तत्राथ शिवपद्मवातो समीरणाः ३० प्रवाति तेन पात्यन्ते तेषां खड्गान्यथोपरि ततः पतन्ति भू-
मौ ज्वलत्पावकसञ्चये ३१ लेलिह्यमाने चान्यत्र व्याप्ताशेषमहीतले सारमेयास्ततः शीघ्रं शातयन्ति शरीरत
३२ तेषां मङ्गानि रुदतामतेवात्यन्ति भीषणाः असिपत्रवनं तात मयैतत्कीर्तितं तव ३३ अतः परं भीमतरं तप्तकु-
म्भं निबोध मे समन्ततस्तप्तकुम्भा वह्निज्वालासमावृताः ३४ ज्वलदग्निचयोद्वृत्ततैलायश्चूर्णपूरिताः तेषु दुष्कृ-
तकर्माणो याम्यैः क्षिप्ता ह्यधोमुखाः ३५ क्वाथ्यन्ते विस्फुटद्गात्रगलन्मज्जजलाविलाः स्फुटत्कपालनेत्रा-
५०. स्थिच्छिद्यमाना विभीषणैः ३६ गृध्रैरुत्पाट्य मुच्यन्ते पुनस्तेष्वेव वेगिते: पुनः सिमसिमायन्ते तैलेनैक्यं व्रज-
न्ति च ३७ द्रवीभूतैः शिरोगात्रस्नायुमांसत्वगस्थिभिः ततो याम्यैर्नरैराशु दर्व्याघट्टनघट्टिताः ३८ क्वाथ्यन्ते महा
तैले मथ्यन्ते पापकर्मिणः एष ते विस्तरेणोक्तस्तप्तकुम्भो मया पितः ३९ इति मार्कण्डेयपुराणे पितापुत्र-
संवादे महारौरवादिनरकाख्यानं १२ पुत्र उवाच अहं वैश्यकुले जातो जन्मन्यस्मात्तु सप्तमे समतीते गवां रो-
निपाने कृतवान् पुरा १ विपाकात् कर्मणस्तस्य नरकं भृशदारुणम् संप्राप्तोऽग्निशिखा घोरमयो सुखखगा-
कुले २ यन्त्रपीडनगात्रस्त्वक् प्रवाहोद्भूतकर्दमे विशस्यमानदुष्कर्मिनिपातरवाकुले ३ पात्यमानस्य मे
तत्र साग्रं वर्षशतं गतं महातापार्तितप्तस्य तृष्णादाहान्वितस्य च ४ तत्राह्लादकरः सद्यः पवनः सुखशीतल-
करम्भवालुकाकुम्भमध्यस्थो मे समागतः ५ तत्सम्पर्कादशेषाणां यातनानां भयहातनानुराः मम चापि यथा स्वर्गे स्व-
र्गिणां निर्वृतिः परा ६ किमेतदिति चाह्लादविस्तारस्तिमितेक्षणैः दृष्टमस्माभिरासन्नं नररत्नमनुत्तमं ॥ ७ ॥
याम्यश्च पुरुषो घोरो दण्डहस्तोऽग्निसन्निभः पुरतो दर्शयन्मार्गमित एहीति चाग्रतः ८ पुरुषः सततं हृष्टाया-

मा॰पु॰ ततो ज्ञानसङ्कुलं नरकं प्राह तं याम्यं किङ्करं कृपयान्वितः ९ पुरुष उवाच भो याम्यपुरुषाचक्ष्व किं मया दुष्कृतं कृतं
४२ येनेदं यातना भीमं प्राप्तोऽस्मि नरकं परं १० विपश्चिदिति विख्यातो जनकानामहं कुले जातो विदेह विषये सम्यङ्म-
नुजपालकः ११ यज्ञैर्मयेष्टं बहुभिर्धर्मतः पालिता मही नोत्सृष्टं चैव संग्रामो नातिथिर्विमुखो गतः १२ पितृ
देवर्षि भृत्याश्च न चापचरिता मया कृता स्पृहा च न मया परस्त्री विभवादिषु १३ पर्व्वकालेषु पितरस्तिथि कालेषु
देवताः पुरुषं स्वयमायान्ति निपानमिव धेनवः १४ यतस्ते विमुखा यान्ति निश्वस्य गृहमेधिनः तस्मादिष्टञ्च
पूर्तञ्च धर्मौ द्वावपि नश्यतः १५ पितृ निश्वास विध्वंसं सप्त जन्मार्जितं शुभं त्रिजन्मप्रभवं दैवं निश्वासो हन्त्यसं
शयं १६ तस्माद्दैवे च पित्र्ये च नित्यमेवहितोऽभवं सोऽहं कथमिमं प्राप्तो नरकं भृशदारुणं १७ इति मार्कण्डेय
पुराणे पितापुत्रसंवादे १३ पुत्र उवाच इति पृष्टस्तदा तेन श्रावतां नो महात्मना उवाच पुरुषो याम्यो घोरोऽपि
प्रश्रितं वचः १ यम किङ्कर उवाच महाराज यथात्थ त्वं तथैतन्नात्र संशयः किन्तु स्वल्पं कृतं पापं भवता स्मारयामि
४१ तत् २ वैदर्भी तव या पत्नी पीवरी नाम नामतः ऋतुस्नाता ऋतु वन्ध्या त्वया तस्याः कृतः पुरा ३ सुशोभनायां कैके-
य्यां मासक्तेन ततो भवान् ऋतु व्यतिक्रमात् प्राप्तो नरकं घोरमीदृशं ४ होमकाले यथा वह्निरिन्धपातमवेक्षते ॥
ऋतौ प्रजापतिस्तद्वद्बीजपातमवेक्षते ५ यस्तमुल्लङ्घ्य धर्मात्मा कामेष्वासक्तिमान् भवेत् सतु पित्र्या दृणात् पा-
पमवाप्य नरकं पतेत् ६ एतावदेव ते पापं नान्यत् किञ्चन विद्यते तदेहि गच्छ पुण्यानामुपभोगाय पार्थिव ७ राजो
वाच यास्यामि देवानुचर यत्र त्वं मां नयिष्यसि किञ्चित् पृच्छामि तन्मे त्वं यथावद्वक्तुमर्हसि ८ वज्रतुण्डास्त्वमी का
काः पुंसां नयनहारिणः पुनः पुनश्चनेत्राणि तद्देषां भवन्तिहि ९ किं कर्म्म कृतवन्तश्च कथयैतज्जुगुप्सितं हर
न्त्येषां तथा जिह्वां जायमानां पुनर्नवां १० क्रकचेन विपाट्यन्ते कस्मादेतेऽति दुःखिताः करम्भवालुकास्वेते पच्य-
न्ते तैलगोचराः ११ अयोमुखैः खगैश्चैते कृष्यन्ते किं विधावद विश्लिष्टदेहबन्धानि महारावविराविणः ॥ १२ ॥
अयश्चञ्चुनिपातेन सर्व्वाङ्ग क्षत दुःखिताः किमेतेऽनिष्टकर्तारस्तुद्यन्तेऽहर्निशं नराः १३ एताश्चान्याश्च दृ-
مارکنڈی پوران श्यन्ते यातनाः पापकर्म्मिणां येन कर्म्म विपाकेन तन्ममाशेषतो वद १४ यम किङ्कर उवाच यन्मां पृच्छसि भूपाल

पापकर्म्मफलोदयं तन्नेऽहं संप्रवक्ष्यामि संक्षेपेणाययथातथं १५ पुण्यापुण्ये हि पुरुषः पर्य्यायेण समश्नुते॥ भुञ्जत
श्च क्षयं याति पापं पुण्यमथापि वा १६ नतु भोगादृते पुण्यं किञ्चिद्वा कर्म्म मानवं पापकं वा पुनात्याशु क्षयो।
भोगात्प्रजायते १७ परित्यजति भोगाच्च पुण्यापुण्ये निबोध मे दुर्भिक्षादेव दुर्भिक्षं क्लेशात्क्लेशं भयाद्भयं १८
मृतेभ्यः प्रमृता यान्ति दरिद्राः पापकर्म्मिणः गतिं नानाविधां यान्ति जन्तवः कर्म्मबन्धनात् १९ उत्सवादुत्सवं
यान्ति स्वर्गात्स्वर्गं सुखात्सुखं श्रद्दधानाश्च शान्ताश्च धनदाः शुभकारिणः २० व्यालकुञ्जरदुर्गाणि।
सर्पचौरभयानि तु हताः पापेन गच्छन्ति पापिनः किमतः परं २१ सुगन्धिमाल्यसद्वस्त्रसाधुपानासनाशनाः
स्त्रस्नानाः सदा यान्ति पुण्यैः पुण्यादिकी हि २२ अनेकशतसाहस्रजन्मसम्बन्धसञ्चितं पुण्यापुण्यं नृणां
तद्वत्सुखदुःखाङ्कुरोद्भवं २३ यथा बीजं हि भूपाल पयो विसर्गमवेक्षते पुण्यापुण्ये तथा कालदेशाद्यं कर्म्मका-
रकं २४ स्वल्पं पापं कृतं पुंसा देशकालोपपादितं पादन्यासकृतं दुःखं कण्टकोत्थं प्रयच्छति २५ तत्प्रभूत-
५४ तरं स्थूलं शूलकीलकसम्भवं दुःखं यच्छति तद्वच्च शिरोरोगादि दुःसहं २६ अपथ्याशनशीतोष्णश्रमता-
पादिकारकं तथान्योन्यमपेक्षन्ते पापानि फलसङ्गमे २७ एवं महान्ति पापानि दीर्घरोगादिविक्रियां तद्व
च्च स्वाग्निकष्टानि बन्धनादिफलानि वै २८ स्वल्पं पुण्यं शुभं गन्धं हेलया सम्प्रयच्छति स्पर्शं वाप्यथवा।
शब्दं रसं रूपमथापि वा २९ चिरात्प्रभूततरं तद्वन्महान्तमपि कालतः एवञ्च सुखदुःखानि पुण्यापुण्योद्भवानि वै
३० भुञ्जानोऽनेकसंसारसम्भवानीह तिष्ठति जातिदेशावरज्ञानि ज्ञानाज्ञानफलानि च ३१ तिष्ठन्ति तत्र यु-
क्तानि लिङ्गमात्रेण चात्मनि वपुषा मनसा वाचा न कदाचित्कथञ्चन ३२ अकुर्वन् पापकं कर्म्म पुण्यं।
वाप्यत्र तिष्ठते यद्यत्प्राप्नोति पुरुषो दुःखं सुखमथापि वा ३३ प्रभूतमथवा स्वल्पं विक्रियाकारि चेतसः॥
तावत्तस्य पुण्यं वा पापं वाप्यपचेतरत् ३४ उपभोगात्क्षयं याति भुज्यमानमिवाश्नं एवमेते महापापं यात-
नाभिरहर्निशं ३५ क्षपयन्ति नरा घोरं नरकान्ते विवर्तिनः तथैव राजन्पुण्यानि स्वर्गलोकेऽमरैः सह॥ ३६॥
गन्धर्व्वसिद्धाप्सरसां गीताद्यैरुपभुञ्जते देवत्वमानुषत्वे च तिर्य्यक्त्वे च शुभाशुभं ३७ पुण्यपापोद्भवं भुङ्क्ते

मा॰पु॰ सुखदुःखोपलक्षणं यत्त्वं पृच्छसि मां राजन् यातनाः पापकर्मिणां केन केनेति पापेन तन्मे वक्ष्याम्यशेषतः
४३ ३८ दुष्टेन चक्षुषा दृष्टाः परदारा नराधमैः मानसेन च दुष्टेन परद्रव्यं च सस्पृहैः ३९ वज्रतुण्डाः खगास्तेषां
हरन्त्येते विलोचने पुनः पुनश्च सम्भूतिरक्ष्णोरेषां भवत्यथ ४० यावतो ऽक्षिनिमेषांस्तु पापमेभिर्नरैः
कृतं तावद्वर्षसहस्राणि नेत्रार्तिं प्राप्नुवन्त्युत ४१ असच्छास्त्रोपदेशास्तु यैर्दत्ता ये च मन्त्रिताः सम्यग्दृष्टि-
विनाशाय रिपूणामपि मानवैः ४२ यैः शास्त्रमन्यथा प्रोक्तं यैः सद्वाग्दुष्टा हता वेददेवद्विजातीनां गुरोर्नि-
न्दा च यैः कृता ४३ हरन्ति तेषां जिह्वां च वज्रनायमलाः पुनः पुनः तावतो वत्सरानेते वज्रतुण्डाः सुदारुणाः
४४ मित्रभेदं तथा पित्रा पुत्रस्य स्वजनस्य च याज्योपाध्याययोर्मातुः सुतस्य सहचारिणः ४५ भार्याप-
त्योश्च ये केचिद्भेदं चक्रुर्नराधमाः तदिमे पश्य पाट्यन्ते करपत्रेण पार्थिव ४६ परोपतापका ये च ये चाह्लाद-
निषेधकाः तालवृन्तानिलस्थानचन्दनोशीरहारिणः ४७ प्राणान्तिकं दुःखमदुष्टानाञ्च ये ऽधमाः कर-
म्भवालुकासंस्थास्त इमे पापभागिनः ४८ भुङ्क्ते श्राद्धं तु यो ऽन्यस्य नरो ऽन्येन निमन्त्रितः दैवे वाप्यथवा
पित्र्ये स द्विधा कृष्यते खगैः ४९ मर्माणि यस्तु साधूनां सद्वाग्भिर्निकृन्तति सनिमेषुद्भवानाशु खगास्ति-
ष्ठन्त्यवारिताः ५० यः करोति च पैशुन्यमन्यथा गन्यथा मतिः पाट्यते हि द्विधा जिह्वा तस्येत्थं निशितैः क्षुरैः
५१ मातापित्रोर्गुरूणाञ्च ये ऽवज्ञां चक्रुरुद्धताः तदिमे पूयविण्मूत्रगर्ते मज्जन्त्यधोमुखाः ५२ देवतातिथि
भूतेषु भृत्येष्वभ्यागतेषु च अभुक्तवत्सु ये ऽश्नन्ति तद्वत् पितृग्निपक्षिषु ५३ दुष्टास्ते पूयनिर्यासभुजः सूची-
मुखास्तु ते जायन्ते गिरिवर्ष्माणः पश्यैते या दृष्टानराः ५४ एकपङ्क्त्यां तु ये विप्रमथ वेतरवर्णजं विषमं भोज-
यन्तीह विड्भुजस्त इमे यथा ५५ एकसार्थप्रयातं ये निःस्वमर्थार्थिनं नरं अपास्य स्वान्नमश्नन्ति त इमे श्लेष्म-
भोजिनः ५६ गोब्राह्मणाग्नयः स्पृष्टा यैरुच्छिष्टैर्नरेश्वर तेषामेते ऽग्निकुम्भेषु लिह्यन्त्याहिताः कराः
५७ सूर्येन्दुतारका दृष्टा यैरुच्छिष्टैस्तु कामतः तेषां याम्यैर्नरैर्नेत्रन्यस्तो वह्निः समध्यते ५८ गावो ऽग्निर्जननी
مارکنڈی پوران विप्रो ज्येष्ठभ्राता पिता स्वसा यामयो गुरवो वृद्धा यैः स्पृष्टास्तु पदा नृभिः ५९ बद्धाङ्घ्रयस्ते निगडैर्लोहैरग्निप्रता-

पिते : अङ्गारराशिमध्यस्थास्तिष्ठन्त्याजानुदाहिनः ६० पायसं कृशरं छागो देवान्नानि चयानि वै भुक्तानि यै-
रसंस्कृत्य तेषां नेत्राणि पापिनां ६१ निपातितानां भूपृष्ठे उद्धृत्य सिनिरीक्षतां सन्दंशैः पश्य कृष्यन्ते नरा यास्ये-
र्मुखान्ततः ६२ गुरुदेवद्विजातीनां वेदानां च नराधमैः निन्दा निशामिता यैश्च पापानामभिनन्दतां ॥ ६३ ॥
तेषां सयोमयान् कीलानग्निवर्णान् पुनः पुनः कर्णेषु प्रेरयन्त्येते याम्या विलपतामपि ६४ यैः प्रपादेव-
विप्रौकोदेवालयसभाः शुभाः भङ्क्त्वा विध्वंसमानीताः क्रोधलोभानुवर्त्तिभिः ६५ तेषामेते शितैः
शस्त्रैर्देहाद्विलपतां त्वचः पृथक् कुर्वन्ति वै याम्याः शरीरादति दारुणाः ६६ गोब्राह्मणार्कमार्गांस्तु ये
ऽत्र मेहन्ति मानवाः तेषामेतानि कृष्यन्ते गुदेनान्त्राणि वायसैः ६७ दत्वा कन्यां यस्त्वेकस्मै द्वितीयाय प्रय-
च्छति सत्वेवं नैकधा छिन्नः क्षारनद्यां प्रवाह्यते ६८ स्वपोषणपरो यस्तु परित्यजति मानवः पुत्रभृत्य-
कलत्रादि बन्धुवर्गमकिञ्चनं ६९ दुर्भिक्षे सम्भ्रमे वापि सोऽप्येवं यमकिङ्करैः उत्कृत्य दत्तानि मुखे स्व-
४४ मांसान्यश्नुते क्षुधा ७० शरणागतान् यस्त्यजति लोभाद्यस्तूपजीविनः सोऽप्येवं यन्त्रपीडाभिः पीड्यते
यमकिङ्करैः ७१ सुकृतं ये प्रयच्छन्ति यावज्जन्मकृतं नराः ते पिष्यन्ते शिलापेषैर्यथैते पापकर्म्मिणः ॥ ७२ ॥
न्यासापहारिणो बद्धाः सर्व्वगात्रेषु बन्धनैः कृमिवृश्चिककाकोलैर्भुज्यन्तेऽहर्निशं नराः ७३ क्षुत्क्षामाश्च
तृष्यत्जिह्वातालवो वेदनातुराः दिवामैथुनिनः पापाः परदारभुजश्च ये ७४ तथैव कण्टकैर्दीर्घैरायसैः प-
श्य शाल्मलिं आरोपिता विभिन्नाङ्गाः प्रसूतासृक्स्त्रवाविलाः ७५ मूषायामपि पश्यैतान् नाश्यमानान्
यमानुगैः पुरुषैः पुरुषव्याघ्र परदाराभिमर्षिणः ७६ उपाध्यायमधः कृत्वा स्तब्धो योऽध्ययनं नरः ॥
गृह्णाति शिल्पमथवा सोऽप्येवं शिरसा शिलां ७७ बिभ्रत् क्लेशमवाप्नोति जनमार्गेऽतिपीडितः क्षुत्प्र-
क्षामोऽहर्निशं भारपीडाव्यथितमस्तकः ७८ मूत्रश्लेष्मपुरीषाणि यैरुत्सृष्टानि वारिणि तइमे श्लेष्म- (६)
विण्मूत्रदुर्गन्धं नरकं गताः ७९ परस्परञ्च मांसानि भक्षयन्ति क्षुधान्विताः भुक्तं नातिथ्यविधिना पूर्वं
मारकंडे पुरान एभिः परस्परं ८० अवविद्धास्तु वेदाग्निरयस्तु यहितास्मिन्ः तइमेशैलशृङ्गाग्रात् पात्यन्तेऽधः पुनः पुन

ज्जन्तुरचेतनः ८ सञ्जायते महावृक्षो सूचिकौवश्रुसन्निभः परदाराभिमर्शात्तु वृको घोरोऽभिजायते ॥ ९ ॥
श्वा शृगालो बको गृध्रो व्याडः कङ्कस्तथा क्रमात् भ्रातृभार्यांश्च दुर्बुद्धिर्यो धर्षयति पापकृत् १० पुंस्कोकि
लत्वमाप्नोति स चापि नरकाच्च्युतः सखिभार्यां गुरोर्भार्यां राजभार्यांश्च पापकृत् ११ प्रधर्षयित्वा कामात्मा शू-
करो जायते नरः यज्ञदानविवाहानां विघ्नकर्त्ता भवेत् कृमिः १२ पुनर्दाता च कन्यायाः कृमिरेवोपजायते देवता
पितृविप्राणाम दत्वा योऽन्नमश्नुते १३ प्रमुक्तो नरकात् सोऽपि वायसः सम्प्रजायते ज्येष्ठं पितृसमं चापि भ्रा-
तरं योऽवमन्यते १४ नरकात् सोऽपि विभ्रष्टः क्रौञ्चयोनौ प्रजायते शूद्रश्च ब्राह्मणीं गत्वा कृमियोनौ प्रजायते
१५ तस्यामपत्यमुत्पाद्य काष्ठान्तःकीटको भवेत् शूकरः कृमिको मद्गुश्चण्डालश्च प्रजायते १६ अकृतज्ञोऽध
मः पुंसां विमुक्तो नरकान्नरः कृतघ्नः कृमिकः कीटः पतङ्गो वृश्चिकस्तथा १७ मत्स्यस्तु वायसः कूर्मः पुक्कसोऽजा-
यते ततः अशस्त्रं पुरुषं हत्वा नरः सञ्जायते खरः १८ कृमिः स्त्रीवधकर्त्ता च बालहन्ता च जायते भोजनं चोरयि-
९४ त्वा तु मक्षिका जायते नरः १९ तत्रापि चास्ति विशेषोऽयं भोजनस्य शृणुष्व तत् हृत्वान्नन्तु समार्जारो जायते नरकाच्च्यु-
तः २० तिलपिण्याकसंमिश्रमन्नं हृत्वा तु मूषिकः घृतं हृत्वा च नकुलः काको मद्गुरजामिषं २१ मत्स्यमां-
सापहृत् काकः श्येनो मार्गामिषापहृत् चीरीवाकस्तु दधि हृत्वा लवणं च निकृमिः २२ चोरयित्वा पयश्चापि
बलाका सम्प्रजायते यस्तु चोरयते तैलं तैलपायी स जायते २३ मधु हृत्वा नरो दंशः पूपं हृत्वा पिपीलिकः चोर-
यित्वा तु निष्पावान् जायते गृहगोलकः २४ आसवञ्चोरयित्वा तु तित्तिरित्वमवाप्नुयात् अयो हृत्वा तु पापात्मा
वायसः सम्प्रजायते २५ हृते कांस्ये च हारीतः कपोतो रूप्यभाजने हृत्वा तु काञ्चनं भाण्डं कृमियोनौ प्रजायते
२६ पत्रोर्णां चोरयित्वा तु क्रकरत्वञ्च गच्छति कौशकारश्च कौशेये हृते वस्त्रेऽभिजायते २७ दुकूले शार्ङ्गिके
पापो हृते चैवांशुके शुकः तथैवाजाविकं हृत्वा वस्त्रं क्षौमञ्च जायते २८ कार्पासिके हृते क्रौञ्चो वाल्कवल्कलं
बकस्तथा मयूरो वर्णकान् हृत्वा शाकपत्रञ्च जायते २९ जीवञ्जीवकतां याति रक्तवस्त्रापहृन्नरः कुकुन्दरः
शुभान् गन्धान् वासो हृत्वा शशो भवेत् ३० षण्डः फलापहरणात् काष्ठस्य घुणकीटकः पुष्पापहृद्दरिद्रश्च

مارکنڈے پوران

 पङ्गुर्यानापहृन्नरः ३१ शाकहर्त्ता च हारीतस्तोयहर्त्ता च चातकः भूहर्त्ता नरकान् गत्वा रौरवादीन् सुदारुणान् ३२
 तृणगुल्मलतावल्लित्वक्सारतरुतां क्रमात् ग्राम्यस्त्रीगाल्यपापस्तु नरो भवति वै ततः ३३ कृमिः कीटः पतङ्गो
ऽथ पक्षी तोयचरो मृगः गोत्वं प्राप्य च चाण्डालपुक्कसादिजुगुप्सितं ३४ पङ्ग्वन्धो बधिरः कुष्ठी यक्ष्मरोगाचप्र।
पीडितः मुखरोगाक्षिरोगैश्च गुदरोगैश्च बाध्यते ३५ अपस्मारी च भवति शूद्रत्वं च स गच्छति एष एव क्र-
मो दृष्टो गोसुवर्णापहारिणां ३६ विद्यापहारिणश्चोग्रा निक्रयं भ्रंसिनो गुरोः जायामन्यस्य पुरुषः पारक्यां
प्रतिपादयन् ३७ प्राप्नोति शठतां मूढो यातनाभ्यः परिच्युतः यः करोति नरो होमम् असमिद्धे विभावसौ ३८
सोऽजीर्णव्याधिदुःखार्त्तो मन्दाग्निः संप्रजायते परनिन्दा कृतघ्नत्वं परमर्मावघट्टनं ३९ नैष्ठुर्यं निर्घृणत्वञ्च
परदारोपसेवनं परस्वहरणाशौचं देवतानाञ्च कुत्सनं ४० निकृत्या वञ्चनं नॄणां कार्पण्यञ्च नृणां वधः ॥
यानि च प्रतिषिद्धानि तत्प्रवृत्तिश्च सन्तता ४१ उपलक्ष्याणि जानीयान्मुक्तानां नरकादनु दया भूतेषु संवादः पर-
४८ लोकप्रतिक्रिया ४२ सत्यं भूतहितार्थोक्तिर्वेदप्रामाण्यदर्शनं गुरुदेवर्षिसिद्धर्षिपूजनं साधुसङ्गमः ४३
सत्क्रियाभ्यसनं मैत्री मिति बुध्येत पण्डितः अन्यानि चैव सद्धर्मक्रियाभूतानि यानि च ४४ स्वर्गच्युतानां लि-
ङ्गानि पुरुषाणामपापिनां एतदुद्देशतो राजन् भवतः कथितं मया ४५ स्वकर्मफलभोक्तॄणां पुण्यानां पा-
पिनान्तथा तदेह्यन्यत्र गच्छामो दृष्टं सर्वं त्वयाधुना त्वया दृष्टो हि नरकस्तदेह्यन्यत्र गम्यतां ४६ पुत्र उवाच
ततस्तमग्रतः कृत्वा स राजा गन्तुमुद्यतः ततश्च सर्वैरुत्क्रुष्टं यातनास्थायिभिर्नृभिः ४७ प्रसादं कुरु भूपेति ति-
ष्ठ तावन्मुहूर्त्तकं त्वदङ्गसङ्गी पवनो मनो ह्लादयते हि नः ४८ परितापञ्च गात्रेभ्यः पीडाबाधाश्च कृत्स्नशः ॥
अपहन्ति नरव्याघ्र दयां कुरु महीपते ४९ एतच्छ्रुत्वा वचस्तेषां तं याम्यं पुरुषं नृपः । पप्रच्छ कथमेतेषामाह्लादो
मयि तिष्ठति ५० किं मया कर्म तत्पुण्यं मर्त्यलोके महत्कृतं आह्लाददायिनी ह्येषां येनेयं तदुदीरय ॥ ५१ ॥
यमपुरुष उवाच पितृदेवातिथिप्रेष्यशिष्टेनान्नेन ते तनुः पुष्टिमभ्यागता यस्माद्भक्तं तं च मनो यतः ५२ ततस्त्वद्गा-
 त्रसंसर्गी पवनो ह्लाददायकः पापकर्मकृतो राजन् यातनां न प्रबाधते ५३ अश्वमेधादयो यज्ञास्त्वयेष्टा विधिव-

हयध्वजो ऽञ्जन श्चैव जन्चा ख्यो मानवा चलः सूर्प कर्णो व्याघ्र मुख: खर्म्मक: कर्व्वटाशन: ११ तथा
चन्द्रेश्वरा श्चैव खशाश्च मगधा स्तथा गिरयो मैथिला: शुभ्रा स्तथा वदन दन्तुरा: १२ प्राग्ज्योतिषा: सलौ-
हित्या: सामुद्रा: पुरुषाद का: पूर्णोत्कटो भद्रगौरस्तथो दय गिरि र्द्विज १३ कषाया मेखला मुष्टास्ता-
म्रलिप्तैक पादपा: वर्द्धमाना: कोशला श्च मुखे कूर्म्मस्य संस्थिता: १४ रौद्र: पुनर्व्वसु: पुष्यो नक्षत्र
त्रितयं मुखे पदे तु दक्षिणे देशा: कौष्ठु के बदत: शृणु १५ कलिङ्ग-बङ्ग-जठरा: कोशला मूषिकान्त-
स्था चेदय श्चोर्द्ध कर्णा श्च मत्स्या द्या विन्ध्य वासिन: १६ विदर्भा नारिकेला श्च धर्म्म द्वीपास्तथै लिका:
व्याघ्र ग्रीवा महा ग्रीवा स्त्रै पुरा: श्म श्रुधारिणा: १७ कैष्किन्ध्या हैम कूटा श्च निषधा: कटकस्थला: ॥
दशार्णा हारिका नग्ना निषादा: काकुला लका: १८ तथैव पर्णशबरा: पौर्व्वे पूर्व्वे दक्षिणे श्लेषर्क्षं
तथा पैत्र्य फाल्गुन्य: प्रथमा स्तथा १९ नक्षत्र त्रितयं पादमाश्रितं पूर्व्व दक्षिणं लङ्का कालाजिना श्
चैव शैलिका निकटा स्तथा २० महेन्द्र मलयाद्री च दर्दुरे च वसन्ति ये कर्कोटक वने ये च भृगुकच्छा: स-
कोङ्कणा: २१ सर्व्वा श्चैव तथा भीरा वेणाया स्तीर निवासिन: अवन्तयो दास पुरास्तथैवा कणिनो जना:
२२ महा राष्ट्रा: सकर्णाटा गोन र्द्दाश्चित्र कूटका: चोला: कोल गिरा श्चैव क्रौञ्च द्वीप जटा धरा: ॥ २३ ॥
कावेरी ऋष्य मूकस्था नासि क्या श्चैव ये जना: शङ्ख-शुक्त्यादि वैदूर्य शैल प्रान्त चरा श्च ये २४ तथा वा-
रिचरा: कोला: चर्म्म पट्ट निवासिन: गणवाह्या: परा: कृष्णा द्वीप वासिनी वासिन: २५ सूर्य्याद्रौ
कुमुदाद्रौ च ये वसन्ति तथा जना: औखावना: सपिशिका स्तथा ये कर्म्म नायका: २६ दक्षिणा: कौ-
रुषा ये च ऋषिकास्तापसाश्रमा: ऋषभा: सिंहला श्चैव तथा काञ्ची निवासिन: २७ तिलङ्ग कुञ्ज-
रदरी कच्छ वासा श्च ये जना: ताम्रपर्णी तथा कुक्षिरिति कूर्म्मस्य दक्षिणा: २८ फाल्गुन्य श्चोत्तरा
हस्त चित्रा चर्क्षत्रयं द्विज कूर्म्मस्य दक्षिणे कुक्षौ बाह्य पादस्तथा परे . २९ काम्बोजा: पह्लवा श्चैव
तथैव वडवा मुखा: तथा च सिन्धु सौवीरा: आनर्त्ता वनिता मुखा: ३० द्रावणा: मार्गिगा: शूद्रा: कर्णा

१४८

(मार्क॰)

प्राश्चेय वर्व्वरा: किराता: पारदा: पाराङ्गा स्तथा पार ग्रवा: कला: ३१ पूर्वे कोहेम गिरि का: सिन्धु काल॰
कवैरता: सौराष्ट्रा दरदा श्चैव द्राविडा श्च महार्णवा: ३२ एते जन पदा: पादे स्थिता वै दाक्षिणो ऽपरे स्वा
त्यो विशाखा मैत्रञ्च नक्षत्र त्रय मेवच ३३ मणि मेघ: क्षुराद्रि श्च खञ्जनो ऽस्त गिरि स्तथा अपरान्ति
का हैहया श्च शान्ति का विप्र शस्त का: ३४ कोकङ्कणा: पञ्चदका वमना ह्यवरा स्तथा तार क्षुरा ह्यङ्गत
का: शर्करा: शाल्म वेश्मका: ३५ गुरुस्वरा: फाल्गुणा का वेणु मत्याञ्च येजना: तथा फाल्गुलुका॰
घोरा गुरुहा श्च कला स्तथा ३६ ऐके क्षणा वाजि केशा दीर्घ ग्रीवा: सचूलिका: अश्व केशा स्तथा पुच्छे
जना: कूर्म्म स्य संस्थिता: ऐन्द्र मूलन्त्र था षाढा नक्षत्र त्रय मेवच माराड व्या श्चाड खारा श्च अष्ट का॰
लन ता स्तथा ३८ कुन्यता लड हा श्चैव स्त्री वाह्या वालि का स्तथा नृसिंहा वेणु मत्या ञ्च बला वस्था
स्तथा परे ३९ धर्म्म वद्धा स्तथा लूका उरु कर्म्म स्थिता जना: वाम पादे जना: पार्श्वे स्थिता: कूर्म्म स्य॰
भारुरे ४० श्रावाढा श्रवणो चैव धनिष्ठा यत्र संस्थिता कैलाशो हिमवाँ श्चैव धनुष्मान् वसुमा स्तथा ४१
क्रौञ्चा: कुरुवका श्चैव क्षुद्र वीणा श्च जना: रसालया: सकै केया भोग प्रस्था: सयामुना: ४२ अन्त
र्द्वीपा स्त्रिगर्त्ता श्च अग्नी ज्या: सार्दना जना: तथैवा श्व मुखा: प्राप्ता श्चि विडा: केश धारिणा: ४३ दासेर
का वाट धाना: शव धाना स्तथैवच पुष्कला धम केराता स्तथा तक्ष शिला श्रया: ४४ अम्बाला मालवो मद्रा
वेणुका सव दन्तिका: पिङ्गला माव कलहा हूणा: कोहल का स्तथा ४५ माराड व्या भूति युव का: शात
का हेमतार का: यशो मत्या: सगान्धारा: खर सागर राशय: ४६ यौ धेया दास मेया श्च राजन्या: श्याम
कास्तथा क्षेम धूर्त्ता श्च कूर्म्म स्य वाम कुक्षि मुपाश्रिता: ४७ वारुणञ्च त्रिनक्षत्रं तत्र प्रौष्ट पदा द्वयं येन॰
किन्नर राजञ्च पशु पालं सकीच कं ४८ काश्मीर कं तथा राष्ट्र गाभि सार जनस्तथा दरदा स्त्वङ्गना श्चैव कु-
लटा ववराष्ट्र का: ४९ सौरिष्ठा ब्रह्म पुर का स्तथैव वन वाह्य का: किरात कौशि का नन्दा जना: पह्लव लोल
ना: ५० दार्वादा मरका श्चैव कुरटा स्वान्न दारका: एक पादा: खशा घोषा: स्वर्ग भौमा नवद्य का: ॥ ५१॥

149 مارکنڈے پوران

तथा सयवना हिङ्गशचीर प्रावरणा श्चये विनेत्राः पौरवा श्चैव गान्धर्व्वा श्च द्विजोत्तम ५२ पूर्व्वोत्तरन्तु ।
कूर्म्मस्य पाद मेते समाश्रिताः रेवत्या श्चाश्विदेवत्यं याम्यञ्च र्क्ष मिति त्रयं ५३ तत्र पादे समाख्याते
पाकाय मुनिसत्तम देशे ष्वेतेषु चैतानि नक्षत्राणय पिद्वे द्विज ५४ एतत्पीडा श्रमी देशाः पीड्यन्ते ये ।
क्रमोदिताः यान्ति चाभ्युदयं विप्र ग्रहैः सम्यग वस्थितैः ५५ यस्य र्क्षस्य पतिर्यो वै ग्रहस्तज्ञा वितोभ-
यं तद्देशस्य मुनिश्रेष्ठ तदुत्कोथे शुभागमः ५६ इत्येके देश सामान्यं नक्षत्र ग्रह सम्भवं भयं लोकस्य
भवति शोभनं वा द्विजोत्तम ५७ स्वर्क्षैर शोभनैर्जन्तोः सामान्य मति भीतिदं ग्रहे र्भवति पीडो त्य ।
मल्पा याम शोभनं ५८ तथैव शोभनः याको दुःस्थिते श्च तथा ग्रहैः अल्पो पकाराय नृणां देशज्ञे ।
श्चात्मनो बुधः ५९ द्रव्ये गोष्ठे ऽथ भृत्येषु सुहृत्सु तनयेषु वा भार्य्यां याञ्च ग्रहे दुःस्थे भय पुण्य वतां नृ-
णां ६० दिग्देश जन सामान्यं नृप सामान्य मात्मजं नक्षत्र ग्रह सामान्यं नरो भुङ्क्ते शुभाशुभ ६२ पर-
स्पराभि रक्षा च ग्रह दौस्थ्येन जायते एतेभ्य एव विप्रेन्द्र शुभ हानि स्तथा शुभैः ६३ यदेतत्कूर्म्म संस्थानं
नक्षत्रेषु मयोदितं एतत्तु देश सामान्य मशुभं शुभ मेव च ६४ तस्मा द्विज्ञाय देशर्क्ष ग्रह पीडान्तथा-
त्मनः कुर्व्वीत शान्तिं मेधावी लोक वादं श्च सत्तम ६५ आकाशा द्देवता नाञ्च दैत्या दीना दोर्हदा
पृथ्व्यां पतन्ति ते लोके लोक वादा इति श्रुताः ६६ तां तथैव बुधः कुर्य्यात् लोकवादान्न हापयेत् तेषा-
न्तत्करणा न्नृणां युक्तो दुष्टागम क्षयः ६७ शुभोदयं प्रज्ञानिश्च पापानां द्विजसत्तम प्रज्ञा हानिं प्रकु-
र्युस्ते द्रव्या दीनाञ्च कुर्व्वते ६८ तस्मा च्छान्ति परः प्राज्ञो लोक वादरतस्तथा लोक वादं श्च शान्तीश्च
ग्रह पीडासु कारयेत् ६९ अद्रोहानुपवासो श्च शस्त चैत्यादि वन्दनं जपं होमं तथा दानं स्नानं क्रोधादि
वर्ज्जनं ७० अद्रोहः सर्व्व भूतेषु मैत्रीं कुर्य्याच्च पण्डितः वर्ज्जयेदसतीं वाच मति वादांस्तथैव च ॥७१॥
ग्रह पूजाञ्च कुर्व्वीत सर्व्व पीडासु मानवः एवं शाम्यन्त्य शेषाणि घोराणि द्विज सत्तम ७२ प्रयता-
नां मनुष्याणां ग्रहर्क्षोत्थान्य शेषतः एष कूर्म्मो मया ख्यातो भारते भगवान् विभुः ७३ नारायणोऽस्य ।

चिन्त्यात्मा यत्र सर्व्वं प्रतिष्ठितं तत्र देवाः स्थिताः सर्व्वे प्रति नक्षत्र संश्रयाः ७४ तथा मध्ये हुत वहः
पृथ्वी सोम श्च वै द्विज मेषा दयस्त्वयो मध्ये मुखे द्वौ मिथुनादि कौ ७५ प्राग्दक्षिणे तथा पादे कर्कि
सिंहौ व्यवस्थितौ सिंह कन्या तुला श्चैव कुक्षौ राशित्रयं स्थितं ७६ तुलाथ वृश्चिक श्चो भौ पादे द-
क्षिण पश्चिमे पृष्टे च वृश्चिके नैव सह धन्वी व्यवस्थितः ७७ वायव्ये चास्य वै पादे धनुर्ग्राहादि कं
त्रयं कुम्भ मीनौ तथै वास्य उत्तरां कुक्षिमाश्रितौ ७८ मीन मेषौ द्विज श्रेष्ठ पादे पूर्व्वोत्तरे स्थितौ कूर्म्मे
देशास्तथ र्क्षाणि देशेष्वेतेषु वै द्विज ७९ राशयश्च तथर्क्षेषु ग्रहराशिष्व वस्थिताः तस्माद्ग्रह र्क्षपीडा
सु देश पीडां विनिर्दिशेत् ८० तत्र स्नात्वा प्रकुर्व्वीत दान होमादिकं विधिं स एष वैष्णवः पादो ब्रह्मा म-
ध्ये ग्रहस्य यः ८१ इति श्री मार्कण्डेय पुराणे कूर्म्मनिर्देशो नाम ५८ मार्कण्डेय उवाच एवन्तु
भारतं वर्षं यथावत् कथितं मुने कृतं त्रेता द्वापरञ्च तथा तिष्यचतुष्टयं १ अत्रैवैतत्युगानान्तु चातुर्व्व-
१०१ र्ण्यों ऽत्रैव द्विज चत्वारि त्रीणि द्वे चैव तथै कञ्च शतं च्छतं २ जीवन्त्यत्र नरा ब्रह्मन् कृत त्रेतादि के
क्रमात् देव कूटस्य पूर्व्वस्य शैलेन्द्रस्य महात्मनः ३ पूर्व्वेण यत् स्थितं वर्षं भद्राश्वं तन्निबोधमे श्वेत
पर्णश्च नीलश्च शैवाल श्चा चलोत्तमः ४ कौरञ्जः पर्णशाला ग्रः पञ्चैते तु कुलाचलाः तेषां प्रसूति
रन्ये ये वहवः क्षुद्र पर्व्वताः ५ तैर्विशिष्टा जन पदा नाना रूपाः सहस्रशः ततः कुमुद संकाशाः शुद्ध
सानु स मंगलाः ६ इत्येव माद्यो ऽन्ये ऽपिशत शो ऽथ सहस्रशः शीता शंखावती भद्रा चक्रावर्त्त-
दिकास्तथा ७ नद्यो ऽथ वह्वो विस्तीर्णाः शीततोयौघवाहिकाः अत्र वर्षे नराः शंख शुद्ध हेम सम
प्रभाः ८ दिव्य सङ्ग मिनः पुण्या दशवर्ष शतायुषः अधमोत्त मौन तेष्वस्तः सर्व्वे ते सम दर्शनाः ९
तितिक्षादि भिरष्टाभिः प्रकृत्या ते गुणैर्युताः तत्राप्यश्व शिरा देव श्चतुर्वाहुर्ज्जनार्द्दनः १० शिरो हृदय
मेढ्राङ्घ्रि हस्तैश्चा क्षित्रयान्वितः तस्या प्यथैवं विषया विज्ञेया जगतः प्रभोः ११ केतुमालमतो
वर्षं निबोध मम पश्चिमं विशालः कम्बलः कृष्णो जयन्तो हरि पर्व्वत: १२ विशोको वर्द्धमानश्च सप्तै

ते कुल पर्व्वताः अन्ये सहस्र शः शैला येषु लोक गणाः स्थितः १३ मौल यस्ते महा काया शाकयोत
करम्भ काः अङ्गुल प्रसुखा श्चापि वसन्ति शत योजनाः १४ ये पिबन्ति महा नद्यो वंक्षु श्यामां स्वकम्बलां
अमोघां कामिनीं श्यामां तथै वान्याः सहस्र शः १५ अत्रा प्यायुः समं पूर्व्वे त्रत्रापि भगवान् हरिः वराह
रूपी पादास्य हस्तष्ट पार्श्वत स्तथा १६ त्रिनक्षत्र युते देशे नक्षत्राणि शुभानि च इत्येतत् केतुमालन्ते।
कथितं मुनि सत्तम १७ अतः परं कुरून् वक्ष्ये निबोधेह ममोत्तरान् तत्र वृक्षा मधुफला नित्य पुष्प फलो।
पगाः १८ वस्त्राणि च प्रसूयन्ते फले ष्वा भरणानि च सर्व्व काम प्रदास्ते हि सर्व्व काम फल प्रदाः॥१९॥
भूमि र्मणि मयी वायुः सुगन्धः सर्व्वदा सुखः जायन्ते मानवा स्तत्र देव लोक परिच्युताः २० मिथुनानि।
प्रसूयन्ते समकाल स्थितानि वै अन्योन्य मनुरक्तानि चक्रवा कोप मानि च २१ चतुर्दश सहस्राणि तेषां
सार्द्धानि वै स्थितिः चन्द्र कान्त श्च शैलेन्द्र सूर्य्य कान्त स्तथा परः २२ तस्मिन् कुला चलौ वर्षे तन्मध्ये च।
152 महानदी भद्र सोमा प्रयात्युर्व्वीं पुण्याया मल जलौ घिनी २३ सहस्रशस्तथै वान्या नद्यो वर्षेऽपि चोत्तरे ॥
तथान्याः क्षीर वाहिन्यो घृत वाहिन्य एव च २४ दध्नोह्रदा स्तथा तत्र तथान्ये चानु पर्व्वताः अमृता स्वाद
कल्पानि फलानि विविधानि च २५ वनेषु तेषु वर्षेषु शत शोऽथ सहस्र शः तत्रापि भगवान् विष्णुः।
प्राक् शिरा मत्स्य रूपवान् २६ विभक्तो नवधा विप्र नक्षत्राणां त्रयं त्रयं दिक्षस्तथापि नवधा विभक्ता।
मुनि सत्तम २७ चन्द्र द्वीपः समुद्रे च भद्र द्वीप स्तथा परः तत्रापि पुण्यो विख्यातः समुद्रान्ते महामुने २८
इत्येतत् कथितं ब्रह्मन् कुरु वर्षं मयोत्तरं शृणु किं पुरुषा दीनि वर्षाणि गदतो मम २९ इति श्री मार्कण्डे
य पुराणे उत्तर कुरु कथनं ५९ मार्कण्डेय उवाच यत्तु किम्पुरुषं वर्षं तत्त्वक्ष्याम्यहं द्विज यत्रा युर्द।
श साहस्रं पुरुषाणां वपुष्मतां १ अनामया ह्य शोका श्च नरा यत्र तथा स्त्रियः प्लक्षः षण्ड श्च तत्रोक्तः
सु महान्नन्द नो पमः २ तस्य ते वै फल रसं पिबन्तः पुरुषाः सदा स्थिर यौवन निष्पन्ना स्त्रिय श्चोत्पल
गन्धिकाः ३ अतः परं किं पुरुषाद्ध रि वर्षं प्रचक्षते महारजत सङ्काशा जायन्ते तत्र मानवाः ४ देव-

(हिन्दी)

مارکنڈے پران

मा.पु. लोकच्युताः सर्व्वे देवरूपाश्च सर्व्वशः हरिवर्षे नराः सर्व्वे पिबन्ति सुरसं शुभं ५ न जरा बाधते तत्र न
२५३ जीर्यन्ते च कर्हिचित् तावन्तमेव ते कालं जीवन्त्यथ निरामयाः ६ मेरुवर्षं मया प्रोक्तं मध्यमं यदि
लावृतं न तत्र सूर्य्यस्तपति न ते जीर्य्यन्ति मानवाः ७ लभन्ते नात्मलाभञ्च रश्मयश्चन्द्रसूर्य्ययोः ॥
नक्षत्राणां ग्रहाणाञ्च मेरोस्तत्र परा द्युतिः ८ पद्मप्रभाः पद्मगन्धा जम्बूफलरसाशिनः पद्मपत्रा
यताक्षास्तु जायन्ते तत्र मानवाः ९ वर्षाणान्तु सहस्राणि तत्रायुस्त्रयोदश शरावाकारसंस्थाने
मेरुमध्ये इलावृते १० मेरुस्तत्र महाशैलस्तदाख्यातमिलावृतं रम्यकं वर्षमस्माच्च कथयिष्ये
निबोधत ११ वृक्षस्तत्रापि चोत्तुङ्गो न्यग्रोधो हरितच्छदः तस्यापि ते फलरसं पिबन्तो वर्त्तयन्ति वै १२
दशायुतायुषस्तत्र नरास्तत्फलभोगिनः रतिप्रधाना विमला जरादौर्गन्ध्यवर्ज्जिताः १३ तस्माद्
योत्तरं वर्षं नाम्ना ख्यातं हिरण्मयं हिरण्वती नदी यत्र प्रभूतकमलोज्ज्वला १४ महाबलाः सते
۱۵۳ जस्का जायन्ते तत्र मानवाः महाकाया महासत्त्वा धनिनः प्रियदर्शनाः १५ इति श्रीमार्कण्डेय
पुराणे भुवनकोशः समाप्तः नाम ६० क्रौष्टुकिरुवाच कथितं भवता सम्यक् यत्पृष्टोऽसि महा
मुने भूसमुद्रादिसंस्थानं प्रमाणानि तथा ग्रहाः १ तेषाञ्चैव प्रमाणञ्च नक्षत्राणाञ्च संस्थितिः ॥
सूरादयस्तथा लोकाः पातालान्यखिलान्यपि २ स्वायम्भुवं तथाख्यातं मुने मन्वन्तरं मम तदन्त
राण्यहं श्रोतुमिच्छे मन्वन्तराणि वै मन्वन्तराधिपान् देवान् ऋषींस्तत्तनयान्नृपान् ३ मार्कण्डेय उवाच
मन्वन्तरं मया ख्यातं तव स्वायम्भुवं च यत् स्वारोचिषाख्यमन्यत्तु शृणु तस्मादनन्तरं ४ कश्चिद्द्वि-
जातिप्रवरः पुरेऽभूदरुणास्पदे वरुणायास्तटे विप्रो रूपेणात्यश्विनावपि ५ मृदुस्वभावः सद्वृत्तो
वेदवेदाङ्गपारगः सदातिथिप्रियो रात्रावागतानां समाश्रयः ६ तस्य बुद्धिरियं त्वासीदहं पश्येयं वसु
न्धरां अतिरम्यवनोद्यानां नानानगरशोभितां ७ अथागतोऽतिथिः कश्चित् कदाचित्तस्य वेश्मनि ॥
مارکنڈی پوران नानौषधिप्रभावज्ञो मंत्रविद्याविशारदः ८ अभ्यर्थितस्तु तेनासौ श्रद्धापूतेन चेतसा तस्याचख्यौ स

देशांश्च रम्याणि नगराणि च ९ वनानि नद्यः शैलांश्च पुण्यान्यायतनानि च स ततो विस्मयाविष्टः
प्राह तं द्विज सत्तमं १० अनेक देश दर्शित्वे नाति श्रम समन्वितः त्वंनाति वृद्धो वयसा नाति हन्त श्च यौव-
नात् कथ मल्पेन कालेन पृथिवी मटसि द्विज ११ ब्राह्मण उवाच मन्त्रौषधि प्रभावेण विप्रा प्रति
हता गतिः योजनानां सहस्रं हि दिनार्द्धेन व्रजाम्यहं १२ मार्कण्डेय उवाच ततः स विप्र स्तं भूयः
प्रत्युवा चेद सादरात् श्रद्दधानो वचस्तस्य ब्राह्मणस्य विपश्चितः १३ मम प्रसादं भगवन् कुरु मंत्र प्रभा-
जं द्रष्टुमे तां मम मही मती वेच्छा प्रवर्त्तते १४ प्रादात्तु ब्राह्मण स्तस्मै पादलेप मुदारधीः अभिमंत्र
या मास दिशं तेना ख्याता श्च यत्नतः १५ तेनानुलिप्त पादोऽथ सद्विजो द्विज सत्तम हिमवन्त नगा श्रे-
नाना प्रस्रवणान्वितं १६ सहस्रं योजनानां हि दिनार्द्धेन व्रजामियत् आया स्यामीति सञ्चिन्त्य तद्दर्शना
परेणाहि १७ संप्राप्तो हिमवत्पृष्ठं नाति श्रान्त तनु द्विज विचचार ततस्तत्र तुहिनाचल भूतले १८ पादा
क्रान्तेन तस्याथ तुहिनेन विलीयता प्रक्षालितः पादलेपः परमौषधि सम्भवः १९ ततो जड गतिः
सोऽथ इतश्चेतश्च पर्य्यटन् ददर्शाति मनोज्ञानि सानूनि हिम भू भृतः २० सिद्ध गन्धर्व जुष्टानि किन्नरा
भिरतानि च क्रीडा विहार रम्याणि देवादीना मितस्ततः २१ दिव्याप्सरोगण शतैराकीर्णान्य वलो-
कयत् नातृप्यत द्विज श्रेष्ठः प्रोद्भूत पुलको मुने २२ क्वचित् प्रस्रवणाकृष्ट जल पातं मनोरमं प्रनृ-
त्यच्छिखि केका भिरन्यत्र च निनादितं २३ दात्यूह को यष्टि काद्यैः क्वचिच्चाति मनोहरैः पुंस्को-
किल कला लापैः श्रुति हारि भिरन्वितं २४ प्रफुल्ल तरु गन्धेन वासिता निल वीजितं मुदा युक्तः स द-
दृशे हिमवन्तं महा गिरिं २५ दृष्ट्वैवं द्विज सुतो हिमवन्तं महा चलं श्वो द्रक्ष्यामीति सं चिन्त्य मतिञ्च-
क्रे गृहं प्रति २६ विभ्रष्ट पादले पोऽथ चिरेण जडित क्रमः चिन्तया मास किमिदं मया ज्ञाना द्दुश्चेष्टितं
२७ यदि प्रलेपो नष्टो मे विलीनो हिम वारिणा शैलोऽति दुर्गम श्चायं दूर ञ्चाहमिहा गतः ॥ २८ ॥
प्रयास्यामि क्रिया हानि मग्नि [illegible] सङ्कटं महदागतं २९ इदं रम्य-

مارکنڈیوپران

मिदं रम्य मित्य स्मिन् वर पर्व्वते सक्त दृष्टिरहं तृप्तिं न यास्ये ऽहं पश्यतेरपि ३० किन्नराणां कलाला-
पाः समन्ताच्छ्रोत्र हारिणः प्रफुल्ल तरु गन्धांश्च घ्राण मत्यन्त मृच्छति ३१ सुख स्पर्शस्तथा वायुः
फलानि स्वादवन्ति च हरन्ति प्रसभं चेतो मनोज्ञानि सरांसि च ३२ एवं गते तु पश्येयं यदि कंचित् तपो
निधिं स मे यदि शो न्मार्गं गमनाय पुरं प्रति ३३ मार्कण्डेय उवाच स एवं चिन्तयन् विप्रो व-
भ्राम च हिमाचले भ्रष्ट पादौषधि बलो वै क्लैव्यं परमं गतः ३४ तं ददर्श भ्रमन्तञ्च मुनि श्रेष्ठं वरू-
थिनी वराप्सरा महा भागा मौलेया रूप शालिनी ३५ तस्मिन् दृष्टे ततः साभूत् द्विज वर्य्ये वरूथिनी
मदना कृष्ट हृदया सानुरागा हि तत् क्षणात् ३६ चिन्तयामास को न्वेष रमणीय तमा कृतिः सफलं
मे भवेज्जन्म यदि मां नाव मन्यते ३७ अहो ऽस्य रूप माधुर्य्य महो ऽस्य ललिता गतिः अहो गंभीरता
दृष्टेः कुतो ऽस्य सदृशो भुवि ३८ दृष्टा देवास्तथा दैत्याः सिद्ध गन्धर्व्व पन्नगाः कथ मेको ऽपि नास्त्य
स्य तुल्य रूपो महात्मनः ३९ यथाहमस्मिन्नप्येष सानुरागस्तथा यदि भवेदत्र मया कार्य्यस्तत-
१५८
तः पुण्य सञ्चयः ४० यद्येष मयि सुस्निग्धां दृष्टि मद्य निपातयेत् कृत पुण्यया न मत्तो ऽन्या त्रैलोक्ये
वनिता ततः ४१ मार्कण्डेय उवाच एवं सञ्चिन्तयन्ती सा दिव्य योषित् स्मरातुरा आत्मानं दर्शया
मास कमनीय तरा कृतिं ४२ तान्तु दृष्ट्वा द्विज सुत श्चारु रूपां वरूथिनीं सोपचारं समागम्य वाक्य
मेतदुवाच ह ४३ कात्वं कमल गर्भाभे कस्य किंवा नुतिष्ठसि ब्राह्मणो ऽह मिहायातो नगरा दरु-
णास्पदात् ४४ पाद लेपो ऽत्र मे ध्वस्तो विलीनो हिम वारिणा यस्यानु भावा दत्राह मागतो मदिरेक्ष-
णे ४५ वरूथिन्युवाच मौलेयाहं महा भागा नाम्ना ख्याता वरूथिनी विचरामि सदैवात्र रम-
णीये महाचले ४६ साहं त्वद्दर्शनाद् विप्र काम वक्तव्यतां गता यदादिश यन्मया कार्य्यं त्वदधीना-
स्मि साम्प्रतं ४७ ब्राह्मण उवाच येनोपायेन गच्छेयं निज गेहं शुचि स्मिते तन्ममाचक्ष्व क-
ल्याणि हान्निनो ऽखिल कर्म्मणां ४८ नित्य नैमित्तिकानान्तु महा हानि र्द्विजन्मनः भवत्यतस्त्वं

مارکنڈے پران

हे भद्रे मासुद्वर हिमालयात् ४९ प्रशस्यते न प्रवासो ब्राह्मणानां कदाचन अपराद्धं न मे भीरु देश ऽ
दर्शन कौतुकं ५० सतो गृहे द्विजाग्रस्य निष्पत्तिः सर्व्व कर्म्मणां नित्य नैमित्तिकानाञ्च हानिरेवं
प्रवासिनः ५१ सात्वं किं बहुनोक्तेन तथा कुरु यशस्विनि यथा नास्तं गते सूर्य्ये पश्यामि निजमालयं
५२ वरूथिन्युवाच मैवं ब्रूहि महाभाग मा भूत्स दिवसो मम मां परित्यज्य यत्र त्वं निज गेह मुपैष्यसि
५३ अहो रम्यतरः स्वर्गो न यतो द्विज नन्दन अतो वयं परित्यज्य तिष्ठामो ऽत्र सुरालयं ५४ सत्वं सह
मया कान्त कान्ते ऽत्र तुहिना चले रममाणो न मर्त्यानां बान्धवानां स्मरिष्यसि ५५ स्रजो वस्त्रान्य ऽ
लङ्कारान् भोक्ष भोज्यानुलेपनं दास्याम्यत्र तथा हन्त स्मरेण वशमाहृता ५६ वीणा वेणु स्वनं ऽ
गीतं किन्नराणां मनोरमं अङ्गाह्लाद करो वायुरुष्णान्न मुदकं शुचि ५७ मनोभिलषितं शय्यासु
गन्ध मनुलेपनं इहासतो महाभाग गृहे किन्ते निजे ऽधिकं ५८ इहासतो नैव जरा कदाचित्ते भवि
ष्यति त्रिदशानामियं भूमिर्यौवनोपचय प्रदा ५९ इत्युक्त्वा सानुरागा सा सहसा कमलेक्षणा
आलिलिङ्ग प्रसीदेति वदन्ती कलमुन्मना: ६० ब्राह्मण उवाच मा मां स्प्राक्षी र्व्रजान्यत्र दुष्टे यः ऽ
सदृशस्तव मयान्यथा याचिता त्वमन्यथैवाप्युपैषि मां ६१ सायं प्रातर्हुतं हव्यं लोकान्यच्छति
शाश्वतान् त्रैलोक्य मेतदखिलं मूढे हव्ये प्रतिष्ठितं ६२ वरूथिन्युवाच किन्ते नाहं प्रिया विप्र
रमणीयो न किं गिरिः गन्धर्व्वान् किन्नरादीं श्च त्यक्त्वा भीष्टो हि कस्तव ६३ निजमालय मप्य ऽ
स्माद्भवान् यास्यत्य संशयं स्वल्प कालं मया सार्द्धं भुङ्क्ष्व भोगान् सुदुर्लभान् ६४ ब्राह्मण उवाच
अभीष्टा गार्हपत्याद्याः सततं मे त्रयो ऽग्नयः रम्यं ममाग्नि शरणं देवी विस्तरणी प्रिया ६५ वरू-
थिन्युवाच अष्टावात्म गुणा यहि तेषामाद्यो दया द्विज तां करोषि कथं नत्वं मयि सद्धर्म्म पालक ॥
६६ त्वद्विमुक्ता न जीवामि तथा प्रीतिमती त्वयि नैतद्वदाम्यहं मिथ्या प्रसीद कुलनन्दन ॥ ६७ ॥
ब्राह्मण उवाच यदि प्रीतिमती सत्यं ... तदुपायं समाचक्ष्व येन यामि स्वमालयं ॥



मा॰पु॰ ६८ वरूथिन्युवाच

६८ वरूथिन्युवाच निज मालय मध्य स्माङ्ग वान यास्य त्य संशये स्वल्प काले मया सार्द्धं भुङ्क्ष्व
भोगान् सुदुर्लभान् ६९ ब्राह्मण उवाच न भोगार्थाय विप्राणां शस्यते हि वरूथिनि इह लोकाय
विप्राणां चेष्टा प्रेत्या फल प्रदा ७० वरूथिन्युवाच मन्त्राणां प्रिय माणाया मम हत्वा परत्र ते ॥
पुराय स्यैव फलं भावि भोगा श्चान्य त्र जन्मनि ७१ एवं च द्वय मप्यत्र तवो पचय कारणं प्रत्याख्या
नाद हं मृत्युं त्वञ्च पाप मवा प्स्यसि ७२ ब्राह्मण उवाच परस्त्रियं नाभिलषे दित्यूचुर्गुरवो मम ॥
तेन त्वां नाभि वाञ्छामि कामं विलप शुष्यवा ७३ मार्कण्डेय उवाच इत्युक्त्वा स महाभागः स्पृष्ट्वा
पः प्रयतः शुचिः प्राहेदं प्रणि पत्याग्निं गार्हपत्य मुपां शुना ७४ भगवन् गार्हपत्याग्ने योनि
स्त्वं सर्व्व कर्म्मणां त्वत्त आहवनीयो ऽग्नि र्दक्षिणाग्नि श्च नान्यतः ७५ युष्म दाप्यायना द्देवा वृ
ष्टि सस्यादि हेतवः भवन्ति सस्या दखिलं जगद् भवति नान्यतः ७६ एवं त्वत्तो भवत्येत द्येन सत्येन वै
१०८ जगत् तथा हम द्य स्वं गेहं पश्येयं सति भास्करे ७७ यथांचे वैदिकं कर्म्म स्व काले नो ज्झितं मया
तेन सत्येन पश्येयं गृहस्थो ऽद्य दिवाकरं ७८ यथा च न पर द्रव्ये परदारे च मे मतिः कदाचित् सा
भिलाषा भूत् थै तत् सिद्धि मेतु मे ७९ इति श्री मार्कण्डेय पुराणे स्वारो चिषे मन्वन्तरे ब्राह्मण वाक्यं
नाम ६१ मार्कण्डेय उवाच एवन्तु वद तस्तस्य द्विज पुत्र स्य पावकः गार्हपत्यः शरीरे तु सन्निधा
न मथा करोत् १ तेन चाधि ष्ठितः सो ऽथ प्रभा मण्डल मध्यगः व्यदीपयत तं देशं मूर्त्ति मानिव हव्य
वाट् २ तस्यास्तु सुतरां तत्र ताह ग्रूपे द्विजन्मनि अनुरागो ऽभव द्विप्र पश्यन्त्या देव योषितः ॥ ३ ॥
ततः सो ऽधिष्ठि तस्तेन हव्य वा हेन तत्क्षणात् यथा पूर्व्वं तथा गन्तुं प्रवृत्तो द्विज नन्दनः ४ जगाम
च त्वरा युक्त स्तथा देव्या निरीक्षितः आदृष्टि पाता तन्वङ्ग्या नि श्वा सोत्क म्पि कन्धरं ५ ततः क्षणे
नैव तदा निजगेह मवाप्य सः यथा प्रोक्तं द्विज श्रेष्ठ श्च कार सकलाः क्रियाः ६ अथ सा चारु सर्व्वा
ङ्गी तत्रा सक्तात्म मानसा विश्वास परमा निन्ये दिन शेषं तथा निशां ७ निश्व सन्त्य नव द्याङ्गी हाहे

مارکنڈی پوران

ति रुदती मुहुः मन्दभाग्येति चात्मानं निनिन्द मदिरेक्षणा ८ न विहारे न चाहारे रमणीये न वा वने
न कन्दरेषु रम्येषु सावबन्ध तदा रतिं ९ चकार रममाणे च चक्रवाकयुगे स्पृहां मुक्ता तेन वरारोहा ।
निनिन्द निज यौवनं १० कागताहमिमं शैलं दुष्टदैव बलात्कृता क्व च प्राप्तः स मे दृष्टिगोचरं ता दृशो
नरः ११ यद्यद्य स महाभागो न मे सङ्गमुपैष्यति तत्कामाग्निरवश्यं मां क्षययिष्यति दुःसहः ॥१२॥
रमणीयमभूद्यत्तत्पुंस्कोकिल निनादितं तेन हीनन्तदैवैतद्दहतीवाद्य मामलं १३ मार्कण्डेय ।
उवाच इत्थं सा मदनाविष्टा जगाम मुनिसत्तमे ववृधे च तदा रागस्तस्यास्तस्मिन्प्रति क्षणं १४
कलिर्नाम्ना तु गन्धर्व्वः सानुरागो निराकृतः तया पूर्व्वं सभूत्सो ऽथ तदवस्थां ददर्श तां १५ स चि-
न्तयामास तदा किन्न्वेषा गजगामिनी निश्वासपवनग्लाना गिरावत्र वरूथिनी १६ मुनिशाप ।
क्षता किन्नु केनचित् किं विमानिता वाष्पवारि परिक्लिन्नमियन्धत्तेयतो मुखं १७ ततः स दध्यौ ।
१५८ सुचिरं तमर्थं कौतुकात्कलिः ज्ञातवांश्च प्रभावेन समाधेः स यथा तथं १८ पुनः स चिन्तयामास
तद्विज्ञाय मुनेः कलिः समीपपादितं साधु भाग्यैरेतत्सुरा कृतेः १९ मयैषा सानुरागेण बहुशः ।
प्रार्थिता सती निराकृतवती सेयमद्य प्राप्या भविष्यति २० मानुषे सानुरागेयं तत्र तद्रूपधारिणी-
रंस्यते मय्य सन्दिग्धं किं कालेन करोमि तत् २१ मार्कण्डेय उवाच आत्मप्रभावेन ततस्त ।
स्य रूपं द्विजन्मनः कृत्वा चचार यत्रास्ते निषण्णा सा वरूथिनी २२ सा तं दृष्ट्वा वरारोहा किञ्चि
दुत्फुल्ल लोचना समेत्य प्राह तन्वङ्गी प्रसीदेति पुनः पुनः २३ त्वया त्यक्ता सन्देहः पारित्यक्ष्या-
मि जीवितं ततो धर्म्मः कष्टतरः क्रियालोपो भविष्यति २४ मया समेत्य रम्ये ऽस्मिन्महाकन्दर
कन्दरे मत्परित्राणजं धर्म्ममवाप्स्यं प्रतिपत्स्यसे २५ आयुषः सावशेषं मे नूनमस्ति महामते नि-
वृत्तस्तेन नूनं त्वं हृदयाह्लादकारकः २६ कलिरुवाच किं करोमि क्रियाहानिर्भवत्यत्र सतोमम
त्वमप्येवंविधं वाक्यं ब्रवीषि तन्मया से २७ [illegible] यद्ब्रवीमि करोषि तत् यदि स्यात्

مارکنڈے پران

सङ्गमो मेऽद्य भवत्या सह नान्यथा २८ वरूथिन्युवाच प्रसीद यद्ब्रवीषि त्वं तत्करोमि न ते मृषा ॥
ब्रवीम्येतदनाशङ्कः यत्ते कार्य्यं मयाधुना २९ नाद्य संभोगसमये द्रष्टव्योऽहं त्वयावने निमीलिता॰
क्ष्याः संसर्गस्तव सुभ्रु मया सह ३० वरूथिन्युवाच एवं भवतु भद्रन्ते यथेच्छसि तथास्तु तत् ॥
मया सर्व्वप्रकारं हि वशे स्थेयन्त्वयाधुना ३१ इति श्रीमार्कण्डेयपुराणे स्वारोचिषे मन्वन्तरे नाम ॥ ६२ ॥
मार्कण्डेय उवाच ततः सह तया सोऽथ रराम गिरिसानुषु फुल्लकाननरम्येषु मनोज्ञेषु सरःसु च
१ कन्दरेषु च रम्येषु निम्नगापुलिनेषु च मनोज्ञेषु तथान्येषु देशेषु मुदितो द्विज २ वन्हिनाधिष्ठि॰
तस्या सौद्य रूपन्तस्य तेजसा अचिन्तयत्सम्भोगकाले निमीलितविलोचना ३ ततः कालेन सा ग-
र्भमवाप मुनिसत्तम गन्धर्व्ववीर्यतो रूपं चिन्तनाच्च द्विजन्मनः ४ तां गर्भधारिणीं सोऽथ सान्त्व-
यित्वा वरूथिनीं विप्ररूपधरो यातस्तया प्रीत्या विसर्ज्जितः ५ जज्ञे स बालो द्युतिमान् ज्वलन्निव
१५४ विभावसुः स्वरोचिर्भिर्यथा सूर्य्यो भासयन् सकला दिशः ६ स्वरोचिर्भिर्यतो भाति भास्वानिव स॰
बालकः ततः स्वरोचिरित्येवं नाम्ना ख्यातो बभूव सः ७ ववृधे च महाभागो वयसानुदिनन्तथा ॥
गुणौघैश्च यथा बालः कलाभिः शशलाञ्छनः ८ स जग्राह धनुर्व्वेदं वेदांश्चैव यथाक्रमं विद्याश्चैव
महाभागस्तदा यौवनगोचरः ९ मन्दराद्रौ कदाचित् स विचरंश्चारुचेष्टितः ददर्शैकां तदा कन्यां
गिरिप्रस्थे भयातुरां १० त्रायस्वेति निरीक्ष्यैनं सा तदा वाक्यमब्रवीत् माभैषीरिति स प्राह भय॰
विप्लुतलोचनां ११ किमेतदिति तेनोक्ते वीरवाक्ये महात्मना ततः सा कथयामास श्वासाक्षेप॰
लुताक्षरं १२ कन्योवाच अहमिन्दीवराख्यस्य सुता विद्याधरस्य वै नाम्ना मनोरमा जाता सु-
तायां मरुधन्वनः १३ मन्दारविद्याधरजा सखी मम विभावरी कलावती चाप्यपरा सुता पारस्य
वै मुनेः १४ ताभ्यां सह मया याते कैलासतटमुत्तमं तत्र दृष्टो मुनिः कश्चित्तपसाति कृशाकृतिः ॥
१५ क्षुत्क्षामकण्ठो निस्तेजा दूरपाताक्षितारकः मया वहसितः क्रुद्धः स तदा मां शशाप ह १६

مارکنڈی پوران

क्षामः क्षामस्वरः किञ्चित्कम्पिताधरपल्लवः त्वयावहसितो यस्मादनार्ये दुष्टतापसि १७ तस्मात्
त्वामचिरेणैव राक्षसोऽभिभविष्यति दत्ते शापे मत्सख्यास्यां स तु निर्भर्त्सितो मुनिः १८ धिक्ते ब्राह्मण-
यमक्षान्त्या हन्त ते निखिलन्तपः अमर्षेणाभिभूतोऽसि तपसा नातिकर्षितः १९ क्षान्त्यास्पदं वै
ब्राह्मण्यं क्रोधसंयमनन्तपः एतच्छ्रुत्वा ददौ शापं तयोरप्यमितद्युतिः २० एकस्याःकुष्ठसङ्गेषु भाव्य
न्यस्यास्तथा क्षयः तयोस्तथैव तज्ज्ञानं यथोक्तं तेन तत्क्षणात् २१ ममाप्येनं महद्रक्षः सस्नु येत्ति-
यदानुगं न श्रृणोमि महानादं तस्या दूरेऽपि गर्ज्जतः २२ तृतीयमद्य दिवसं यन्मे पृष्ठन्न मुञ्चति॥
अस्त्रग्रामस्य सर्व्वस्य हृदयग्राहमस्ति मे २३ तं प्रयच्छामि मां रक्ष रक्षसोऽस्मान्महामते प्रादात्-
स्वायम्भुवायादौ स्वयं रुद्रः पिनाकधृक् २४ स्वायम्भुवो वशिष्ठाय सिद्धवर्य्याय दत्तवान् तेनापि दत्तं
मन्मातुः पित्रे चित्रायुधाय वै २५ प्रादादौ हाहिकं सोऽपि मत्पित्रे श्वशुरः स्वयं मयापि शिक्षितं।
१५० वीर सकाशाद्धाल या पितुः २६ हृदयं सकलास्त्राणां समशेषरिपुनाशनं तदिदं गृह्यतां शीघ्रमशे-
यास्त्रपरायणं २७ ततो जहि दुरात्मानमेनं ब्रह्मसमागतं २८ मार्कण्डेय उवाच तथेत्युक्ते-
ततस्तेन वार्य्युपस्पृश्य तस्य तत् अस्त्राणां हृदयं प्रादात् सरहस्यनिवर्त्तनं २९ एतस्मिन्नन्तरे रक्ष-
स्तत्तदा भीषणाकृतिः नर्द्दमानो महानादमाजगाम त्वरान्वितः ३० मयाभिभूता किं त्राणामुपेयि
द्रुतमेहि मे भक्षाय किञ्चिरेणेति ब्रुवाणं तं ददर्श सः ३१ स्वरोचिश्चिन्तयामास दृष्टातं समुपागतं॥
गृह्णात्वेय वचः सत्यं तस्यास्त्विति महामुने ३२ जग्राह समुपेत्येनां त्वरया सोऽपि राक्षसः त्राहि
त्राहीति करुणां विलपन्तीं सुमध्यमां ३३ ततः स्वरोचिः संक्रुद्धः प्रचण्डास्त्रमति भैरवं दृष्ट्वा निवेश्य
तद्रक्षो दृग्योनि निश्चलेक्षणः ३४ तदाभिभूतः स तदा तां मुक्त्वाथ निशाचरः प्रसीद शाम्यतामस्त्रं
श्रूयतां चैव मे वचः ३५ मोक्षितोऽहं त्वया शापादतिघोरान्महाद्युते प्रदत्ता दत्ति तीव्रेण ब्रह्ममि-
त्रेण धीमता ३६ उपकारी नमे त्वत्तो महाभागाधिकोऽपरः येनाहं सुमहाकष्टान्महाशापाद्वि-

मोक्षितः ३७ स्वरोचिरुवाच ब्रह्ममित्रेण मुनिना किं निमित्तं महात्मना शापस्त्वं कीदृशश्चैव ॥
शापो दत्तो ऽभवत्पुरा ३८ राक्षस उवाच ब्रह्ममित्रो ऽष्टधा छिन्नमायुर्वेदमधीतवान् त्रयोदशाधि
कारञ्च प्रशस्याथर्वणो द्विजः ३९ अहञ्चेन्दीवराख्येति ख्यातो ऽस्य जनको ऽभवं विद्याधर-
पतेः पुत्रो नलनाभस्य खड्गिनः ४० मया च याचितः पूर्वं ब्रह्ममित्रो ऽभवन्मुनिः आयुर्वेदमशेषं मे
भगवान् दातुमर्हसि ४१ यदा तु बहुशो वीर प्रश्रयावनतस्य मे न प्रादाद्याचितो विद्यामायुर्वेदात्मि
कां मम ४२ शिष्येभ्योऽददतस्तस्य मयान्तर्धानगेन हि आयुर्वेदात्मिका विद्या गृहीता भूत दानव ॥
४३ गृहीतायान्तु विद्यायां मासैरष्टाभिरन्तरात् ममातिहर्षादभवद्धासो ऽतीव पुनः पुनः ॥ ४४ ॥
प्रत्यभिज्ञाय मां हासान्मुनिः कोपसमन्वितः विकम्पिकन्धरः प्राह मामिदं परुषाक्षरं ४५ राक्षसे
नैव यस्मान्मे त्वया ऽदृश्येन दुर्मते हृता विद्या वहासच्च मामवज्ञाय वै क्षणः ४६ तस्मात्त्वं राक्षसः
१५१ पाप मच्छापेन निराकृतः भविष्यसि न सन्देहः सप्तरात्रेण दारुणः ४७ इत्युक्ते प्रणिपातैश्चै॥
स्तव चौरैः प्रसादितः समामाह पुनर्विप्रस्तत्क्षणान्मृदुमानसः ४८ यन्मयोक्तमवश्यन्तद्भावि
गन्धर्व्व नान्यथा किन्तु त्वं राक्षसो भूत्वा पुनः स्वं प्राप्स्यसे वपुः ४९ नष्टस्मृतिर्यदा क्रुद्धः स्वमपत्य
ञ्चि खादिषुः निशाचर त्वं गन्तासि तदस्त्वानलता पितः ५० पुनः संज्ञामवाप्य स्वामवाप्स्यसि नि-
जं वपुः तथैव स्वमधिष्ठानं लोके गान्धर्वसंज्ञिते ५१ सोऽहं त्वया महाभाग मोक्षितोऽस्मान्महाभयात्
निशाचरत्वाद्वीर तेन मे प्रार्थनां कुरु ५२ इमान्ते तनयां भार्यां प्रयच्छामि प्रतीच्छ तां आयुर्वेदञ्च
सकलस्त्वष्टाङ्गो यो मयाहृतः मुनेः सकाशात्सं प्राह स्तं गृहीष्व महामते ५३ मार्कण्डेय उवाच
इत्युक्त्वा प्रददौ विद्यां स च दिव्याम्बरोज्ज्वलः स्रग्भूषणधरो दिव्यं पुराणं वपुरास्थितः ५४ दत्त्वा
विद्यां ततः कन्यां स दातुमुपचक्रमे तमाह सा तदा कन्या जनितारं स्वकं पिता ५५ अनुरागो मम॥
ऽप्यत्र तातातीव महात्मनि दर्शनादेव संजातो विशेषेणोपकारिणि ५६ किन्त्वेते मम सख्यो सो
مارکنڈی پوران

मा॰पु॰ मत्कृते दुःख पीडिते अतो नाभिलषे भोगान् भोक्तुमेते न वै समं ५७ पुरुषे रथिनो शक्या कर्त्तुमित्थं नृशं-
९६२ सता स्वभाव रुचिरे मोहक् कथं योषित् करिष्यति ५८ साहं यथा ते दुःखार्त्ते मत्कृते कन्यके पितः ॥
तथा स्थास्यामि तद्दुःखे तच्छोकानल तापिता ५९ स्वरोचिरुवाच आयुर्व्वेद प्रसादेन ते करिष्ये ।
पुनर्न्नवे सख्यौ तव महा शोकं समुत्सृज्य सु मध्यमे ६० मार्कण्डेय उवाच ततः पित्रा स्वयं दत्तां तां क-
न्यां स विधानतः उपयेमे गिरौ तस्मिन् स्वरोचि श्चारु लोचनां ६१ दत्तान्तु तां तदा कन्या म भि प्रान्त्य च ।
भाविनीं जगाम दिव्य या गत्या गन्धर्व्वः स्वपुरन्ततः ६२ स चापि सहित स्तन्व्या तदु द्यानन्तदा ययौ ॥
कन्य का युगलं यत्र तच्छा पाच्च गदातुरं ६३ ततस्तयोः स स्त्वज्ञो रोग घ्नैरौषधैरसैः चकार नीरुजे
देहे स्वरोचिर पराजितः ६४ ततोऽति शोभने कन्ये विमुक्ते व्याधितः शुभे स्वकान्त्यो ज्योतिदिग्भागे
चक्राते तन्मही धरं ६५ इति श्री मार्कण्डेय पुराणे स्वारोचिषे मन्वन्तरे नाम ६३ मार्कण्डेय उवाच ॥
१९८ एवं विमुक्त रोगा तु कन्य का तं मुदान्विता स्वरोचिष मुवा चेदं श्रूयतां वचनं प्रभो १ मन्दार विद्याधर-
जा नाम्ना ख्याता विभावरी उपकारिन् स्व मात्मानं प्रयच्छामि प्रतीच्छ मां २ विद्याञ्च तुभ्यं दास्या-
मि सर्व्व भूत रुतानि ते यया भिव्य क्तिमेष्यन्ति प्रसादं कुरु मे भव ३ मार्कण्डेय उवाच एवमस्त्विति
तेनोक्ते धर्म्मज्ञेन स्वरोचिषा द्वितीया तु तदा कन्या इदं वचनम ब्रवीत् ४ कुमार ब्रह्म चार्य्यासीत् पारो ।
नाम पिता मम ब्रह्मर्षिः सु महा भागो वेद वेदाङ्ग पारगः ५ तस्य पुंस्कोकिलालाप रमणीये मधौ पुरा॥
आजगामाप्सरोभ्यासं पुरस्तात् पुञ्जिकस्थला ६ कामवशं व्यतं नीतः स तदा मुनि पुङ्गवः तत्संयोगा-
दह मुत्पन्ना तस्या मत्र महाचले ७ विहाय मां गता सा च साला स्मिन्निर्जने वने बाला मे कां मही पृष्ठे ।
व्याल श्वा पद संकुले ८ ततः कलाभिः सौ मस्य वर्द्धन्ती भिर वश्यं आप्याय्य माना हर हो हर्दिं ।
याताऽस्मि सत्तम ९ ततः काला वती त्येवं नाम मे नाम महात्मना गृहीता या ः कृतं पित्रा गन्धर्व्वेण सुमा- (६६)
مارکنڈی پوران नना १० नद त्ताहं तदा तेन याचि तेन महात्मना दैत्या रिणा लिना सुवलो मे घातितः पिता ॥ ११ ॥

ततोऽहमति निर्व्वेदादात्मव्यापादनोद्यता निवारिता भगवता सत्या सत्यव्रतिव्रता १२ नाशुचः
सुभ्रु भर्त्ता ते महाभागो भविष्यति स्वरोचिर्नाम पुत्रश्च मनुस्तस्य भविष्यति १३ आज्ञाञ्च निधयः
सर्व्वे करिष्यन्ति तवाहताः यथाभिलषितं वित्तं प्रदास्यन्ति च ते शुभे १४ यस्या वत्से प्रभावेन वि-
द्यायास्तां गृहाण मे पद्मिनी नाम विद्येयं महापद्माभिपूजिता १५ इत्याह मां दक्षसुता सती सत्य
परायणा स्वरोचिस्त्वं ध्रुवं देवी नान्यथा सा वदिष्यति १६ साहं प्राणप्रदायाद्य तां विद्यां त्वं तथा।
वपुः प्रयच्छामि प्रतीच्छ त्वं प्रसादसुमुखो भव १७ मार्कण्डेय उवाच एवमस्त्विति तामाह सतु
कन्यां कलावतीं विभावर्य्याः कलावत्याः स्निग्धहस्यानुमोदितः १८ जग्राह च ततः पाणी स
तयोरमरद्युतिः नदत्सु देवतूर्य्येषु नृत्यत्स्वप्सरःसु च १९ इति श्री मार्कण्डेय पुराणे स्वारोचिषे।
मन्वन्तरे नाम ६४ मार्कण्डेय उवाच ततः स ताभिः सहितः पत्नीभिरमरद्युतिः रराम तस्मिन् शै-
१५३ लेन्द्ररम्यकानननिर्झरे १ सर्व्वोपभोगरत्नानि मधूनि मधुराणि च निधयः समुपाजह्रुः पद्मिन्या।
वशवर्त्तिनः २ स्रजो वस्त्राण्यलङ्कारान् गन्धाढ्यमनुलेपनं आसनान्यतिशुभ्राणि काञ्चनानि।
यथेच्छया ३ सौवर्णानि महाभागकरकान् भाजनानि च तथा शय्याश्च विविधा दिव्यैरास्तरणैर्यु-
ताः ४ एवं स ताभिः सहितो दिव्यगन्धाधिवासिते रराम स्वरुचिर्भाभिर्भासिते वरपर्व्वते ५ ता-
श्चापि सह तेनातिलेभिरे मुदमुत्तमां रममाणो यथा स्वर्गे तथा तत्र शिलोच्चये ६ कलहंसी जगादैकां
चक्रवाकीं जले सतीं तस्य ताश्चाञ्च ललिते सकन्दर्पे च स्पृहावती ७ धन्योऽयमतिपुण्योऽयं योऽयं
यौवनगोचरः दयिताभिः सहैताभिर्भुंक्ते भोगानभीप्सितान् ८ सन्ति यौवनिनः श्लाघ्यास्तत्पत्न्यो
नातिशोभनाः जगत्यल्पकाः पत्न्यः पतयश्चातिशोभनाः ९ अभीष्टा कस्यचित् कान्ता कान्तः
कस्याश्चिदीप्सितः परस्परानुरागाढ्यं दाम्पत्यमतिदुर्लभं १० धन्योऽयं दयिताभीष्टो ह्येताश्चा।
स्यातिवल्लभाः परस्परानुरागो हि धन्यानामेव जायते ११ एतन्निशम्य वचनं कलहंसीसमीरितं

उवाच चक्रवाकी तां नाति विस्मित मानसा: १२ नायं धन्यो यतो लज्जा नान्य स्त्री सन्नि कर्षतः अन्यां
स्त्विय मयं भुंक्ते न सर्व्वा स्वस्य मानसं १३ चित्तानुराग एकस्मिन्न धिष्ठाने यतः सखि ततोहि प्रीति मा
नेव भार्य्या शुभदिता कथं १४ एतानदयिताः पत्युर्नैता सां दयितः पतिः विनोद मात्र मेवैता यथा परि
जनोऽपरः १५ एतासाञ्च यदीष्टोऽथं तत् किं प्राणान्न मुञ्चति आलिङ्ग्य परां कान्तां ध्यातो वे कान्त
यान्यया १६ विद्या प्रदान मूल्येन विक्रीतो होष भृत्यवत् प्रवर्त्ततो नहि प्रेम समं वह्वीषु तिष्ठति १७
कलहंसि पतिर्धन्यो मम धन्याह मेवच यस्यैकस्याञ्चिरं चित्तं यस्या श्चैकत्र संस्थितं १८ मार्कण्डेय
उवाच सर्व्व सत्व रुतज्ञोऽसौ स्वरोची रपराजितः निशम्य लज्जितो दध्यौ सत्य मेव हि नान्नृतं ॥ १९ ॥
ततो वर्ष शते याते रममाणो महागिरौ रममाणः समन्ताभि र्ददर्श पुरतो मृगं २० सुस्निग्ध पीना
वयवं मृगी यूथ विहारिणं वासिताभिः स्वरूपाभि र्मृगीभिः परिवारितं २१ आहाय धारा पुटकी जि
घ्रन्ती स्तास्ततो मृगी: उवाच स मृगो रामा लज्जा त्यागेन गम्य तां २२ नाहं स्वरोचीसच्छीलो नचैवा
हं सुलोचना: निर्लज्जा बहवः सन्निता ह्यास्तत्र गच्छत २३ एकास्वनेकानुगता यथा हास्यदं
जने अनेकाभि स्तथैवैको भोग दृष्ट्या निरीक्षितः २४ तस्य धर्म्म क्रिया हानि रहन्य हनि जायते ॥
सक्तोऽन्य भार्य्यया चान्य कामा सक्तः सदैव सः २५ यस्ता दृशोऽन्यस्त च्छीलः परलोक पराङ्मु
खः तं कामयत भद्रं वो नाहं तुल्यः स्वरोचिषा २६ इति श्री मार्कण्डेय पुराणे स्वारोचिषे मन्वन्त
रे पञ्च षष्टि तमोऽध्यायः ६५ मार्कण्डेय उवाच एवं निशम्य माना स्ता हरिणेन मृगाङ्गनाः
श्रुत्वा स्वरोचीरात्मानं मेने स पतितं यथा १ त्यागे चकार च मनः सता सां मुनि सत्तम चक्रवाकी मृग
प्रोक्तो मृग चर्य्या जुगुप्सितः २ समेत्य ताभि र्भूयश्च वर्द्ध मान मनोभवः आसिद्ध निर्व्वेद कथो रेमे
वर्ष शतानि षट् ३ किन्तु धर्म्मा विरोधेन कुर्व्वन् धर्म्मा श्रिताः क्रियाः भुंक्ते स्वरोची विषयान् सह
ताभि रुदार धीः ४ ततश्च जज्ञिरे तस्य पुत्रा: स्वरोचिषः विजयो मेरुनन्द श्च प्रभाव श्च महा

मा॰पु॰ बलः ५ मनोरमा च विजयं प्राह्लेन्द्रीवरात्मजा विभावरी मेरुनन्दं प्रभावञ्च कलावती ६ पद्मिनी नाम या
२६५ विद्या सर्व्वभोगोपपादिका सा तेषां तत्र भावेन पिता चक्रे पुरत्रयं ७ प्राच्यान्तु विजयं नाम कामरूपे न-
गोपरि विजयाय सुताया ऽदात् स ददौ पुरमुत्तमं ८ उदीच्यां मेरुनन्दस्य पुरीं नन्दवतीमिति ख्याताञ्चा-
कार प्रोत्तुङ्गवप्रप्राकारमालिनीं ९ कलावती सुतस्यापि प्रभावस्य निवेशितं पुरं तालमिति ख्यातं
दक्षिणापथमाश्रितं १० एवं निवेश्य पुत्रान् स पुरेषु पुरुषर्षभः रेमे ताभिः समं विप्र मनोज्ञेष्वथ भूमिषु
११ एकदा तु गतो ऽरण्ये विहरन् स धनुर्द्धरः ददर्श स तु सालोक्य वराहमति दूरगं १२ अथाह काचिद-
भ्येत्य तं तदा हरिणाङ्गना मय्येव पात्यतां बाणः प्रसीदेति पुनः पुनः १३ किमनेन हतेनाद्य मामाशु वि-
निपातय त्वया निपातितो बाणो दुःखान्मां मोक्षयिष्यति १४ स्वरोचिरुवाच न ते शरीरं सरुजम-
स्माभिरुपलक्ष्यते किन्नु तत्कारणं येन त्वं प्राणान् हातुमिच्छसि १५ मृग्युवाच अन्यास्वासक्तहृद-
१५० ये यस्मिंश्चेतः सक्ता त्वदृते मम तेन विना मृत्युरौषधं किमिहापरं १६ स्वरोचिरुवाच कस्त्वान्नाभिलषे-
द्भीरु सानुरागासि कुत्र वा यस्य प्राप्तौ निजान् प्राणान् परित्यक्तुं व्यवस्यसि १७ मृग्युवाच त्वामेवेच्छा-
मि भद्रन्ते त्वया मे ऽपहृतं मनः वृणोम्यतो मृत्युं मयि बाणो निपात्यतां १८ स्वरोचिरुवाच त्वं
मृगी चञ्चलापाङ्गी नररूपधरा वयं कथं त्वया समं योगो मद्विधस्य भविष्यति १९ मृग्युवाच ॥
यदि सापेक्षितञ्चित्तं मयि ते मां परिष्वज यदि वा साधु चित्तन्ते करिष्यामि यथेप्सितं एतावताहं भवता
भविष्याम्यतिमानिता २० मार्कण्डेय उवाच आलिलिङ्ग ततस्तां स स्वरोचिर्हरिणाङ्गनां तेन चा-
लिङ्गिता सद्यः साभूद्दिव्यवपुर्धरा २१ ततः स विस्मयाविष्टः का त्वमित्यभ्यभाषत सा चास्मै कथया-
मास प्रेमलज्जाजडाक्षरं २२ अहमभ्यर्थिता देवैः काननस्यास्य देवता उत्पादनीयो हि मनुस्त्वया म-
यि महामते २३ प्रीतिमत्यां मयि सुतं भूर्लोकपरिपालकं तमुत्पादय देवानां त्वामहं वचनाद्वदे ॥२४॥
مارکنڈے پران मार्कण्डेय उवाच ततः स तस्यान्तनयं सर्व्वलक्षणलक्षितं तेजस्विनमिवात्मानं जनयामास तत्क्षणात्

२५ जात मात्रस्य तस्याथ देव वाद्या निसस्वनुः जगुर्गन्धर्व्व पतयो ननृतुश्चाप्सरो गणाः २६ सिषिचु
शीकरैर्नागा ऋषयश्च तपोधनाः देवाश्च पुष्प वर्षञ्च मुमुचुश्च समन्ततः २७ तस्य तेजः समालोक्य नाम
चक्रे पिता स्वयं द्युतिमानिति येनास्य तेजसा भासिता दिशः २८ स बालो द्युतिमान्नाम स महा बल परा
क्रमः स्वरोचिषः सुतो यस्मात्तस्मात्स्वारोचिषोऽभवत् २९ स चापि विचरन्स्वस्थे कदाचिद्गिरि
निर्झरे स्वरोचीर्ददृशे हंसं निजपत्नी समन्वितं ३० उवाच स तदा हंसीं साभिलाषां पुनः पुनः उपसं
ह्रीयतामात्मा चिरन्ते क्रीडितं मया ३१ किं सर्व्व कालं भोगैस्ते आसन्नन्त्वपरमे वयः परित्याग स्य
कालो मे तव चापि जलेचरि ३२ हंस्युवाच अकालः कोहि भोगानां सर्व्व भोगात्मकं जगत् यज्ञाः
क्रियन्ते भोगार्थं ब्राह्मणैः संयतात्मभिः ३३ इष्टा इष्टांस्तथा भोगान् वाञ्छमाना विवेकिनः दानानि
च प्रयच्छंति पूर्त्त धर्म्मांश्च कुर्व्वते ३४ सत्वं मेच्छसि किं भोगान् भोग श्रेष्ठा फलं नृणां विवेकिनो
१७७ तिरश्चाञ्च किं पुनः संयतात्मनां ३५ हंस उवाच भोगेष्व सक्त चित्तानां परमात्मान्विता मतिः ॥
भविष्यति कदा सङ्गमुपेतानाञ्च बन्धुषु ३६ पुत्र मित्र कलत्रेषु सक्ताः सीदन्ति जन्तवः सरः पङ्कार्ण
वे मग्ना जीर्णा वन गजा इव ३७ किं न पश्यसि वा भद्रे जात सङ्गं स्वरोचिषं आबाल्यात्का मसं सक्तं
मग्नं स्नेहाम्बु कर्द्दमे ३८ यौवनेऽतीव भार्य्यासु साम्प्रतं पुत्र नप्तृषु स्वरोचिषो मनो मग्न मुद्धारं प्राप्स्य
ते कुतः ३९ नाहं स्वरोचिष स्तुल्यः स्त्री वाध्यो वा जलेचरि विवेकवांश्च भोगानां निर्वृत्तोऽस्मि च
साम्प्रतं ४० मार्कण्डेय उवाच स्वरोचिरि तदा कर्णार्य जातो द्वेगः स्वगो रिति आदाय भार्य्यास्तपसे
ययावन्यत्तपो वनं ४१ तत्र तप्त्वा तपो घोरं सह ताभिरुदारधीः जगाम लोकानमलान्निर्धूता खिल
कल्मषः ४२ इति श्री मार्कण्डेय पुराणे स्वारोचिषे मन्वन्तरे नाम ६६ मार्कण्डेय उवाच ततः
स्वारोचिषं नाम्ना द्युतिमन्तं प्रजापतिं मनुञ्चकार भगवांस्तस्य मन्वन्तरं शृणु १ तत्रान्तरे तु ये देवा
मुनयस्तत्सुताश्च ये भूपालाः क्रौष्टुके ये तान्गदत स्त्वं निशामय २ देवाः पारावतास्तत्र तथैव तुषिता

مارکنڈی پوران

मा०पु० द्विज स्वारोचिषेऽन्तरे चेन्द्रो विपश्चिदिति विश्रुतः ३ ऊर्ज्जस्तम्बस्तथा प्राणो दत्तोलिऋषभस्तथा
१६७ निश्चरश्चार्व्वरीवांश्च तत्र सप्तर्षयोऽभवन् ४ चैत्रकिंपुरुषाद्याश्च सुतास्तस्य महात्मनः सप्तासन्सु
महावीर्याः पृथिवीपरिपालकाः ५ तस्य मन्वन्तरं यावत्तावत्तद्वंशविस्तरे मुक्तेयमवनिः सर्व्वा द्वि-
तीयं वै तदन्तरं ६ स्वारोचिषस्तु चरितं जन्म स्वारोचिषस्य च निशम्य मुच्यते पापैः श्रद्दधानो हि मा-
नवः ७ इति श्री मार्कण्डेयपुराणे स्वारोचिषसमाप्तं ६७ क्रौष्टुकिरुवाच भगवन्कथितं सर्व्वं १
विस्तरेण त्वया मम ॥ स्वारोचिषस्तु चरितं जन्म स्वारोचिषस्य तु १ अष्टौ ये निधयस्तेषां स्वरूपं द्रव्य २
संस्थितिः भवता निहितं सम्यक् श्रोतुमिच्छाम्यहं गुरो ३ मार्कण्डेय उवाच पद्मिनी नाम या वि-
द्या लक्ष्मीस्तस्याश्च देवता तदाधाराश्च निधयस्तन्मे निगदतः शृणु ४ यत्र पद्ममहापद्मौ तथा मकर
कच्छपौ मुकुन्दो नन्दकश्चैव नीलः शंखोऽष्टमो निधिः ५ सत्यामृद्धौ भवन्त्येते सिद्धिर्नैषां हि जायते
१५८ एते ह्यष्टौ समाख्याता निधयस्तव क्रौष्टुके ६ देवतानां प्रसादेन साधुसंसेवनेन च राशियालोकितं १
वित्तं मानुषस्य यदा मुने ७ यादृक् स्वरूपं भवति तन्मे निगदतः शृणु पद्मी नाम निधिः पूर्व्वं यस्य
भवति द्विज ८ सुतस्य तत्सुतानाञ्च तत्पौत्राणाञ्च नित्यशः दाक्षिण्यसारं पुरुषस्तेन चाधिष्ठितो १
भवेत् ९ सत्त्वाधारो महाभोगो यतोऽसौ सात्त्विको निधिः सुवर्णरूप्यताम्रादि धातूनाञ्च परिग्रहं
१० करोत्यतितरां सोऽथ तेषाञ्च क्रयविक्रयं करोति च तथा यज्ञान् दक्षिणाञ्च प्रयच्छति ॥ ११ ॥
सभां देवनिकेतांश्च स कारयति तन्मनाः सत्त्वाधारो निधिश्चान्यो महापद्म इति श्रुतः १२ सत्त्वप्र-
धानो भवति तेन चाधिष्ठितो नरः करोति पद्मरागादिरत्नानाञ्च परिग्रहं १३ मौक्तिकानां प्रवालानां
तेषां च क्रयविक्रयान् ददाति योगशीलेभ्यस्तेषामावसथांस्तथा १४ स कारयति तच्छीलः स्वयमेव
च जायते तत्प्रसूतास्तथा शीलाः पुत्रपौत्रक्रमेण च १५ पूर्व्वाद्वे भावः भ्रष्टासौ पुरुषं धन मुञ्चति ॥
مارکنڈےپوران तामसो मकरो नाम निधिस्तेनावलोकितः १६ पुरुषोऽथ तमःप्रायः सुशीलोऽपि हि जायते बाण

खड्गर्ष्टि धनुषां चर्म्मणाञ्च परिग्रहं १७ दंसनानाञ्च कुरुते याति मैत्रीञ्च राजभिः ददाति शौर्य्य वृत्तीनां भूभुजां
ये च तत्प्रियाः १८ क्रय विक्रये च शस्त्राणां नान्यत्र प्रीति मेति च एक स्यैव भवत्येष न च तस्यानुजानुगः॥
१९ द्रव्यार्थं दस्युतो नाशं संग्रामे चापि स व्रजेत् कच्छपाख्यो निधिर्य्यो ऽसौ नरस्तेनाभिवीक्षितः २० तमः प्रधा-
नो भवति यतो ऽसौ तामसो निधिः व्यवहारान शेषांस्तु पुण्य भांतिः करोति च २१ कर्म्मं स्थान खिलां श्चैव
न विश्वसिति कस्यचित् समस्तानि यथाङ्गानि संहरत्येव कच्छपः २२ तथा विष्टभ्य चित्तानि तिष्ठत्याय
त मानसः नददाति नवा भुंक्ते तद्विनाश भयाकुलः २३ निधान मुर्व्व्यां कुरुते निधिः सो ऽप्येक पूरुषः॥
रजोगुण मयश्चान्यो मुकुन्दो नाम यो निधिः २४ नरोऽवलोकितस्तेन तद्गुणी भवति द्विज वीणावेणु
मृदङ्गा नामातोद्यस्य परिग्रहं २५ करोति गायतां वित्तं नृत्यताञ्च प्रयच्छति वन्दिनामथ सूतानां वि-
टाना लास्य पाठिनां २६ ददात्यहर्निशं भोगान् भुंक्ते तैश्च समं द्विज कुलटासु रतिश्चास्य भवत्यन्यैश्च
१५० तद्विधैः २७ प्रयाति सङ्गमेकञ्च यं निधिर्भजते नरं रजस्तमो मयश्चान्यो नन्दो नाम महानिधिः २८
उपैति स्तम्भ माधिकं नरस्तेनाव लोकितः समस्त धातु रत्नानां पुण्य धान्यादि कस्य च २९ परिग्रहं करो-
त्येष तथैव क्रय विक्रयं आधारः स्वजनानाञ्चागताभ्यागतस्य च ३० सहते नापमानोक्तिं स्वल्पाम-
पि महा मुने स्तूयमानश्च महतीं प्रीतिं बध्नाति यच्छति ३१ यं यमिच्छति वै कामं मृदुत्व मुपयाति च॥
बह्व्यो भार्य्या भवन्त्यस्य सुतिमत्यो ऽतिशोभनाः ३२ रस्येव सप्त च नरान्निधिर्नन्दोऽनुवर्त्तते अवर्द्ध-
मानो ऽथ नरमष्ट भागेन सत्तम ३३ दीर्घायुष्ट्वञ्च सर्व्वेषां पुरुषाणां प्रयच्छति बन्धूनामेव भरणां ये च-
दूरादुपागताः ३४ तेषां करोति वै नन्दः परलोके न चादृतः भवत्यस्य न च स्नेहः सहवासिषु जायते
३५ पूर्व्व मित्रेषु शैथिल्यं प्रीति मन्यैः करोति च तथैव सत्व रजसी यो बिभर्त्ति महानिधिः ३६ स नील
संज्ञस्तत्सङ्गी नरस्तच्छील वान् भवेत् वस्त्र कार्पास धान्यादि फल पुष्प परिग्रहं ३७ मुक्ता विद्रुम शंखा-
नां शुक्त्यादीनां तथा मुने [illegible] ३८ क्रय विक्रय मन्येषां नान्यत्र

मारکنڈے پوران

रमते मनः तडागगन् पुष्करिण्यो ऽथ तथा रामान् करोतिच ३९ वप्रञ्च सरितां हृक्षास्त था रोपयते॰
नरः अनुलेपन पुष्पादि भोगं भुक्ता भि जायते ४० त्रिपौरुष श्चापि निधि र्नीलो नामैष जायते रजस्त
मो मय श्चान्यः शंख संज्ञो द्वियो निधिः ४१ तेनापि नीयते विप्र तद्गुणित्वं निधीश्वरः एक स्यैव भव
त्येष नरं नान्य मुपैति च ४२ यस्य शङ्खो निधि स्त स्य स्वरूपं क्रौष्टुके शृणु एक एवात्मना स्वष्ट॰
मन्नं भुंक्ते तथा म्बरं ४३ कदन्न भुक् परिजनो नच शोभनं वस्त्र धृक् नददाति सुहृद्भार्य्या भ्रात्ट पुत्र॰
स्नुषादिषु ४४ स्व पोषण परः शंखी नरो भवति सर्व्वदा इत्येते निधयः ख्याता नराणा मर्थ देवताः॥
४५ मिश्रावलोकनान्मि श्राः स्वभाव फल दायिनः यथा ख्यात स्वभावस्तु भवत्येव विलोकनात्
सर्व्वेषा माधि पत्ये च श्रीरेषा द्विज पद्मिनी ४६ इति श्री मार्कण्डेय पुराणे निधि निर्णयोनाम ६८
क्रौष्टुकिरुवाच विस्तरात् कथितं ब्रह्मन् मम स्वारोचिषं त्वया मन्वन्तरं तथै वाशेषे पृष्टा निधयो
१५५ मया १ स्वायम्भुवं पूर्व्व मेव मन्वन्तर मुदा हृतं मन्वन्तरं तृतीयं मे कथयोत्तम संज्ञितं २ मार्कण्डे
य उवाच उत्तान पाद पुत्रो ऽभूदुत्तमो नाम नामतः सुरुच्या स्तनयः ख्यातो महा बल पराक्रमः ३
धर्म्मात्मा च महात्मा च पराक्रम धनो नृपः अतीत्य सर्व्व भूतानि बभौ भानु परा क्रमः ४ समः
शत्रौ च मित्रे च परे पुत्रे च धर्म्मवित् दुष्टे च यमवत्साधौ सोम वच्च महा मते ५ वाभ्रव्यां बहुला नाम
उपयेमे स धर्म्मवित् उत्तान पाद तनयः शची मिन्द्र इवोत्तमः ६ ख्याता मतीच तस्यासी द्विज वर्य्य॰
मनः सदा स्नेह वच्छशिनो यद्द्रोहिण्यां निहि तास्पदं ७ अन्य प्रयोजना प्राप्ति मुपैति न हि तन्मनाः
स्वप्ने चैव तदा लम्बि मनो ऽभूत्तस्य भूभृतः ८ सच तस्याः सुचार्व्वङ्ग्या दर्शना देव पार्थिवः ददाति॰
स्पर्शनं गात्रे गात्रस्पर्शे च तन्मयः ९ श्रोत्रे ह्रेश करं वाक्यं प्रिय मप्य वनीपतेः तस्याधि भूरि सम्मा
नं मेने परि भवन्ततः १० अवमेने स्रजं दत्तां शुभान्या भरणानि च उतस्थावङ्क पीडेव पिबतो ऽस्य॰
वरा सवं ११ भुञ्जता च नरेन्द्रेण क्षण मात्रं करे धृता बुभुजे स्वल्प कं भक्ष्यं द्विज नाति मुदावती ॥१३॥

मा॰ पु॰ अथ पानगतो भूपः कदाचित्तां मनस्विनीं सुरापूर्णं पान पात्रं ग्राहयामास सादरः २४ पश्यतां भूमि-
१७० पालानां वार मुख्यैः समन्वितः प्रगीयमान मधुरं गेयं गायनतत्परैः २५ सा तु नेच्छति तत्पात्रं मादृ-
शं तत्परा ङ्मुखी समक्षमवनी शानां ततः क्रुद्धः स पार्थिवः २६ उवाच द्वाः स्थ माहूय निश्वसन्नुरगो
यथा निरा कान्त स्त यां देव्या प्रिय या पतिर प्रियः २७ द्वाः स्थेनां दुष्ट हृदया मादाय विजने वने परित्यज
शुने तन्ने विचार्य्यं वचनं मम २८ मार्कण्डेय उवाच ततो नृपस्य वचनम विचार्य्य महेश्वसः द्वाः स्थ-
स्त त्याज तां सुभ्रू मारोप्य स्यन्दने वने २९ सा च तं विपिने त्यागं नीता तेन महीभृता अदृश्य माना तं मेने
परं कान्त मनुग्रहं ३० सोऽपि तद्राग रागाग्निरिद्ध मानात्म मानसः औत्तानपादि र्भूपालो नान्यां भार्य्या-
म विन्दत ३१ संस्मार तां सुचार्व्वङ्गी महर्निशमनिर्वृतः चकार च निजं राज्यं प्रजा धर्मेण पालयन्
३२ प्रजाः पालय तस्तस्य पितुः पुत्रा निवौरसान् आगत्य ब्राह्मणः कश्चिदिद माहार्त्त मानसः ३३ ॥
ब्राह्मण उवाच महाराज सुश्रार्तो ऽस्मि श्रूयतां गदतो मम न हरा मार्त्ति परि त्राता मन्य तो न नराधिप
३४ मम भार्य्या प्रसुप्तस्य केनाप्यप हृता निशि गृह द्वार मनुद्घाट्य तां समानेतुमर्हसि ३५ राजोवाच
नवेत्सि केनाप हृता क वा नीता तु सा द्विज यतामि विग्रहे कस्य कुतो वाप्यानयामितां ३६ ब्राह्मण उवाच
तथैव स्थगिते द्वारि प्रसुप्तस्य मही पते हृता हि भार्य्या किं केनेत्येतद्धि ज्ञायते भवान् ३७ त्वं रक्षिता नो
नृपते यज्ञभागादानवेतनः धर्म्मस्य तेन निश्चिन्ताः स्वपन्ति मनुजा निशि ३८ राजोवाच न ते दृष्टा मया
भार्य्या यादृग्रूपा च सा देहतः वयश्चैव समाख्याहि किं शीला ब्राह्मणी च ते ३९ ब्राह्मण उवाच कठोर
नेत्रा सात्युच्चा ह्रस्वबाहुः कृशानना विरूप रूपा भूपाल न निन्दामि तथैव तां ४० वाचि भूपाति परु-
षा न सौम्या सा च शीलतः इत्याख्याता मया भार्य्या सा कारा दुर्निरीक्षणा ४१ मनाग तीतं भूपाल त-
स्या स्तु प्रथमं वयः ताहग्रूपा हि मे भार्य्या सत्य मेतन्मयो दितं ४२ राजोवाच अलन्ते ब्राह्मण
तया भार्य्या मन्यां ददामि ते सुखाय भार्य्या कल्याणी दुः ख हेतु र्हि ता दृशी ४३ कान्ते स्वरूपता विप्र

कारणं शील मुत्तमं रूप शील विहीनाथा त्यान्त्या सा तेन हेतुना ३४ ब्राह्मण उवाच रक्ष्या भार्य्या मही-
पाल वृत्तिनः श्रुति रुत्तमा भार्य्या योरक्ष माणा यां प्रजा भवति रक्षिता ३५ प्रजात्मा हि जायते तस्यां सा
रक्ष्या ते नरेश्वर अजायां रक्ष माणा या मात्मा भवति रक्षितः ३६ तस्या मरक्ष्य माणा यां भविता वर्ण स-
ङ्करः स पातयेन्मही पाल पूर्व्वान् स्वर्गा दधः पितॄन् ३७ धर्म्म हानि स्तवानु दिन मभार्य्यस्य नरेश्वर नि-
त्य क्रियाणां विभ्रंशान् स चापि पतनाय ते ३८ तस्यां त्वं पृथिवी पाल भविनी मनु सन्ततिः तव षड्-
भाग दात्री सा भाविनी धर्म्म हेतुकी ३९ तदेतत्ते मया ख्याता पत्नी या ते हृता प्रभो तां समानय रक्षायां
भवानाधि गतो यतः ४० मार्कण्डेय उवाच ततस्येवं वचः श्रुत्वा विस्मयं स नरेश्वरः सन्नद्धोपि कवचो
युक्त मारुरोह महारथं ४१ इत श्चेत श्च तेना सौ पर्य्यटन् प्राप मेदिनीं नर्म्मदा च महारण्ये तापसा श्रम मु-
त्तमं ४२ अवतीर्य्य च तत्रा सौ प्रविश्य ददृशे मुनिं कौश्यां वृष्यां समा सीनं ज्वलन्त मिव तेजसा ४३
१८। स दृष्ट्वा नृपतिं प्राप्तं समुत्थाय त्वरान्वितः संमान्य स्वागतेनैव शिष्य मार्घ्य मानय ४४ तमाह शिष्यः
शनकै र्दीयतो ऽर्घ्यो ऽस्य किं मुने तदा ज्ञापय तच्छिन्त्य तवाज्ञां हि करोम्यहं ४५ ततो ऽवगत वृत्तान्तो
भूपते स्तस्य सद्विजः संभाव्य स्वागतेन चक्रे सम्मान मात्मवान् ४६ ऋषिरुवाच किं निमित्त मिहा-
यातो भवान् किन्ते चिकीर्षितं उत्तान पाद तनयं वेद्मित्वा मुत्तमं नृप ४७ राजोवाच ब्राह्मण स्य गृहा-
द्भार्य्या केनाप्यपहृता मुने अविज्ञात स्वरूपेण तामन्वेष्टु मिहा गतः ४८ पृच्छामि यत्ते तन्मे त्वं प्र-
णा तस्यानु कम्पया अस्या गतस्याग्र पृच्छं भगवन् वक्तु मर्हसि ४९ ऋषिरुवाच पृच्छ मामवनी पा-
ल यत्प्रष्टव्य मशङ्कितः वक्तव्यञ्चेत्तव मया कथं सो ऽर्घ्यो निवारितः ५१ ऋषिरुवाच त्वद्दर्श-
नेन रभसा दाज्ञप्तो ऽयं मया नृप यदा तदा हमे तेन शिष्येण प्रति बोधितः ५२ एष वेत्ति जगत्यत्र मत्प्र-
सादा दनागतं यथाहं समतीतं च वर्त्त मानञ्च सर्व्वतः ५३ आलोच्या ज्ञापये त्युक्ते ततो ज्ञातं मया
पितत ततो न दत्त वानर्घ्य महं तुभ्यं विधानतः ५४ सत्यं राजन् त्वमर्घ्यार्हः कुले स्वायम्भुवस्य च ॥

مارکنڈےپوران

तथापि नार्घ्य योग्यं त्वां मन्यामो वय मुत्तमं ५५ राजोवाच किं कृतं हि मया ब्रह्मन् ज्ञानात् ज्ञानतोपि
वा येनत्वत्तोऽर्घ्य मर्हामि नाहमभ्यागतश्चिरात् ५६ ऋषिरुवाच किं विस्मृतन्ते यत्पत्नी त्वया
त्यक्ता च कानने परित्यक्त स्त्वया सार्द्धं त्वया धर्म्मो नृपाखिल: ५७ पक्षेण कर्म्मणो हान्या ह्यपात्य
स्यांतानर: विरामूत्रैर्वा वैधि की यस्य हानिस्ते नित्य कर्म्मणा: ५८ पत्न्याऽनुकूलया भाव्यं यथा शी
लेऽपि भर्त्तरि दु:शीलापि तथा भार्य्या पोषणीया नरेश्वर ५९ प्रतिकूला हि सा पत्नी तस्या विप्रस्य
या हृता तथापि धर्म्म कामोऽसौ त्वा मुद्याति तरां नृप ६० चलन्त: स्थापयत्यन्यान् स्वधर्म्मेषु मही
पते त्वां स्वधर्म्माद्विचलितं कोऽपर: स्थापयिष्यति ६१ मार्कण्डेय उवाच विलक्ष: स महीपाल
इत्युक्त स्तेन धीमता तथेत्युक्त्वा च पप्रच्छ हृतां पत्नीं द्विजन्मन: ६२ भगवन् केन नीता सा पत्नी विप्र
स्य कुत्रवा अतीतानागतं वेत्ति जगत्य वितथं भवान् ६३ ऋषिरुवाच तां जहाराद्रि तनयो बलाको
१८४ नाम राक्षस: द्रक्ष्यसे चाद्य तां भूप उत्पलावतके मुने ६४ गच्छ संयोजयाशु त्वं भार्य्यया हि द्विजोत्तमं ॥
सा पापास्पदतां यातु त्वामि वासौ दिने दिने ६५ इति श्री मार्कण्डेय पुराणे औत्तम मन्वन्तरे नाम ॥ ६९ ॥
मार्कण्डेय उवाच अथारुरोह स्वरथं प्रणिपत्य महामुनि: तेनाख्यातं वनन्तच्च प्रययावुत्पला-
वतं १ यथाख्यात स्वरूपाञ्च भार्य्यां भग्नां द्विजस्य तां भक्षयन्तीं ददर्शाथ श्री फलानि नरेश्वर: २
पप्रच्छ च कथं भद्रे त्वमेतद्वनमागता स्फुटं ब्रवीहि वैशालेरपि भार्य्या सुशर्म्मणा: ३ ब्राह्मण्युवा-
च सुताहमति रात्रस्य द्विजस्य वनवासिन: पत्नी विशाल पुत्रस्य यस्य नाम त्वयोदितं ॥ ४ ॥ साहं
हृता बलाकेन राक्षसेन दुरात्मना प्रसुप्ता भवनस्यान्ते भ्रातृ मातृ वियोजितं ५ भस्मीभवतु तद्रक्षो
येनास्म्येवं वियोजिता मात्रा भ्रातृभिरन्यैश्च तिष्ठाम्यत्र सुदु:खिता ६ अस्मिन् वनेऽति गहने
तेनानीयाहमुज्झिता नवेद्मि कारणं किं तन्नोप भुंक्ते न खादति ७ राजोवाच अपि तज्ज्ञायते
रक्षस्त्वामुत्सृज्य क्वचै गतं अपि भार्य्या नतेनाथ बोधिता द्विजनन्दिनि ८ ब्राह्मण्युवाच अस्यैव



(औत्तम)

مارکنڈے پوران

...भविता हिममन्दिरे ९ ब्राह्मण उवाच अस्त्येव



कानन स्यान्ते स तिष्ठति निशाचरः । प्रविश्य पश्यतु भवान् न बिभेति ततो यदि ९ मार्कण्डेय उवाच
प्रविवेश ततः सोऽथ तया वर्त्मनि दर्शिते ददृशे परिवारेण समवेतञ्च राक्षसं १० दृष्ट्वा मानि ततस्त
स्मिन् त्वरमाणः स राक्षसः दूरादेव महीं मूर्ध्ना स्पृशन् पादान्तिके ययौ ११ राक्षस उवाच समाग
च्छता गेहं प्रसादस्ते महान् कृतः प्रशाधि किं करोम्येष वसामि विषये तव १२ अर्घ्यञ्चेमं
प्रतीच्छ त्वं स्थीयताञ्चेदमासनं वयं भृत्या भवान् स्वामी दृढमाज्ञापयस्व मां १३ राजोवाच ॥
कृतमेव त्वया सर्व्वं सर्व्वामेवातिथिक्रियां किमर्थं ब्राह्मणवधूस्त्वयानीता निशाचर १४ नेयं सु
रूपा सन्त्यन्या भार्य्या यद्येव हृता त्वया भक्ष्यार्थं चेत् कथं नात्ता त्वयैतत् कथ्यतां मम १५ राक्षस-
उवाच न वयं मानुषाहारा अन्ये ते नृप राक्षसाः सुकृतस्य फलं यत्तु तदश्नीमो वयं नृप १६ स्वभाव
ञ्च मनुष्याणां योषिताञ्च विमानिताः मानिताश्च समश्नीमो न वयं जन्तुखादकाः १७ यदस्मा
١٨٣ भिर्नृणां क्षान्तिर्भुक्ताः क्रुध्यन्ति ते तदा भुक्ते दुष्टे स्वभावे च गुणवन्तो भवन्ति च १८ सन्ति नः प्रमदा
भूप स्वरूपेणाप्सरसां समाः राक्षस्यस्तासु तिष्ठत्सु मानुषीषु रतिः कथं १९ राजोवाच यद्येषा
नोपभोगाय नाहाराय निशाचर गृहं प्रविश्य विप्रस्य तत्किमेषा हृता त्वया २० राक्षस उवाच ॥
मन्त्रवित् स द्विजश्रेष्ठो यज्ञे यज्ञे गतस्य मे रक्षोघ्नमन्त्रपठनात् करोत्युच्चाटनं नृप २१ वयं बुभुक्षि
तास्तस्य मन्त्रोच्चाटनकर्म्मणा क्व यामः सर्व्वयज्ञेषु स ऋत्विग्भवति द्विज २२ ततोऽस्माभिरि
दन्तस्य वैकल्यमुपपादितं पत्न्या विना पुमानिज्याकर्म्मयोग्यो न जायते २३ मार्कण्डेय उवाच
वैकल्योच्चारणात्तस्य ब्राह्मणस्य महामतेः ततः स राजातिभृशं विषण्णः सम जायत २४ वैक-
ल्यमेव विप्रस्य वदन्तामेव निन्दति अनर्हमर्थस्य धर्मां सोऽप्याह मुनिसत्तमः २५ वैकल्यं तस्य ।
विप्रस्य राक्षसोऽप्याह मे यथा अपत्नीकृततया सोऽहं सङ्कटे महता स्थितः २६ मार्कण्डेय उवाच ॥
مارکنڈیپوران एवं चिन्तयतस्तस्य पुनरप्याह राक्षसः प्रणामनम्रो राजानं बद्धाञ्जलिपुटो मुने २७ नरेन्द्राज्ञा

मा॰ पु॰ प्रदानेन प्रसादः क्रियतां मम भृत्यस्य प्रणतस्य त्वं युक्त द्विज यदासिनः २८ राजोवाच स्वभावेऽप्य
१७४ मर्षी मस्त्व योऽनं यन्निशाचर तदर्थिनो वयं येन कार्य्येणा शृणु तन्मम २९ अस्यास्त्वयाद्य ब्राह्मण्या
दौः शील्य मुप भुज्यतां येन त्वयात्तदौः शील्या तद्विनीता भवेदियं ३० नीयतां यस्य भार्य्येयं तस्य॰
वेश्म निशाचर अस्मिन् कृते कृतं सर्व्वं गृहम भ्यागतस्य मे ३१ मार्कण्डेय उवाच ततः स राक्षस
स्तस्याः प्रविश्यान्तः स्वशक्त्या भक्षयामास दौः शील्यं निज शक्त्या नृपाज्ञया ३२ दौः शील्येना
ति रौद्रेण पत्नी तस्य द्विजन्मनः तेन सा सम्परित्यक्ता तमाह जगतो पतिं ३३ स्वकर्म्म फल पाकेन भर्त्तु
स्तस्य महात्मनः वियोजिताहं तद्धेतुस्त्वमासीन्निशाचरः ३४ नास्य दोषो न वा तस्य मम भर्त्तुर्महा-
त्मनः ममैव दोषो नान्यस्य सुकृतं ह्युप भुज्यते ३५ अन्य जन्मनि कस्यापि विप्रयोगः कृतो मया ॥
सोऽयं मया प्युप गतः को दोषोऽस्य महात्मनः ३६ राक्षस उवाच प्रापयामि तवादेशाद्दिमां भर्त्तु॰
१८५ गृहं प्रभो यदन्यत्करणीयन्ते तदाज्ञापय पार्थिव ३७ राजोवाच अस्मिन् कृते कृतं सर्व्वं त्वया मे॰
रजनीचर आगन्तव्यन्त्वं ते वीर कार्य्य काले स्मृतेन मे ३८ मार्कण्डेय उवाच तथेत्युक्त्वा तु तद्रक्ष॰
स्तामादाय द्विजाङ्गनां निन्ये भर्त्तृ गृहं शुद्धां दौः शील्या पगमान्नृप ३९ इति श्री मार्कण्डेय पुराणे
औत्तम मन्वन्तरे नाम ७० मार्कण्डेय उवाच तां प्रेषयित्वा राजापि स्व भर्त्तृ गृह मङ्गनां चिन्तया॰
मास निः श्वस्य किमत्र सुकृतं भवेत् १ अनर्थयोग्यता कष्टं समामाह महा मनाः वैकल्यं विप्र मुद्दिश्य
तथा ह्यायं निशाचरः २ सोऽहं कथं करिष्यामि त्यक्ता पत्नी मया हि सा अथवा ज्ञान दृष्टिं तं पृच्छामि॰
मुनि सत्तमं ३ सञ्चिन्त्येत्यं स भूपालः समारुह्य च तं रथं ययौ यत्र स धर्म्मात्मा त्रिकालज्ञो महा मुनिः
४ अवरुह्य रथात्सोऽथ तं समेत्य प्रणम्य च यथा वृत्तं समाचख्यौ राक्षसेन समागमं ५ ब्राह्मण्या
दर्शनञ्चैव दौः शील्या पगमं तथा प्रेषणं भर्त्तृ गेहे च कार्य्यं मागमने च यत् ६ ऋषिरुवाच ज्ञातमे
مارکنڈے پوران तन्मया पूर्व्वं यत्कृतन्ते [illegible] ७ पृच्छमामिह किं कार्य्यं॰

क्षितस्तेन स राज्ञो मौलिनः सुतः शशाप तं दुरात्मानं शूद्र एव भविष्यति ९ प्रयास्यति क्षयं ब्रह्म यत्ते
ऽधीतं गुरोर्मुखात् होमधेनुर्मम गुरोर्यद्दियं हिंसिता त्वया १० एवं शप्तो नृपः क्रुद्धस्तच्छापपरिपीडितः
प्रति शाप परो विप्र तोयं जग्राह पाणिना ११ सो ऽपि राज्ञो विनाशाय कोपश्चक्रे द्विजोत्तमः तमभ्येत्य
त्वरायुक्तो वारयामास वै पिता १२ वत्सालमलमत्यर्थं कोपेनायासवैरिणा ऐहिकामुष्मिकहितः ।
शम एव द्विजन्मनां १३ कोपस्तपो नाशयति क्रुद्धो भ्रश्यत्यथायुषः क्रुद्धस्य गलते ज्ञानं क्रुद्धश्चार्थाच्च
हीयते १४ न धर्मः क्रोधशीलस्य नार्थश्चाप्नोति रोषणः नालं सुखाय कामाप्तिः कोपेनाविष्टचेतसो
१५ यदि राज्ञा हता धेनुरियं विज्ञानिना सता युक्तं मन्ये दयां कर्त्तुमात्मनो हितबोधिना १६ अथवाऽजा-
नता धेनुरियं व्यापादिता मम तत्कथं शापयोग्योऽयं दुष्टं नास्य मनो यतः १७ आत्मनो हितमन्विच्छन्
बाधते यो ऽपरं नरः कर्त्तव्या मूढ विज्ञाने दया तत्र दयालुभिः १८ अज्ञानतः कृते दण्डं पातयन्ति बुधा ।
यदि बुधेभ्यस्तमहं मन्ये वरमज्ञानिनो नराः १९ नाद्य शापस्त्वया देयः पार्थिवस्यास्य पुत्रक स्वकर्मणो-
व पतिता गौरेषा दुःखमृत्युना २० मार्कण्डेय उवाच पृषध्रो ऽपि मुनेः पुत्रं प्रणम्यानम्रकन्धरः ॥
प्रसीदेति जगादोच्चैरज्ञानाद्घातितेति च २१ मया गवयबुद्ध्या गौरवध्या घातिता मुने अज्ञानाद्धो ।
मधेनुस्ते प्रसीद त्वं च नो मुने २२ ऋषिपुत्र उवाच आजन्मनो महीपाल न मया व्याहृतं मृषा क्रोध
श्चाद्य महाभाग नान्यथा मे कदाचन २३ तन्नाहमेनं शक्नोमि शापं कर्त्तुं नृपान्यथा यस्ते समुद्यतः ।
शापो द्वितीयः स निवर्त्तितः २४ इत्युक्तवन्तं तं बालमादाय स पिता ततः जगाम स्वाश्रमं सोऽपि पृ-
षध्रः शूद्रतामगात् २५ इति श्री मार्कण्डेय पुराणे पृषध्रोपाख्याने ११२ मार्कण्डेय उवाच कारूषाः
क्षत्रियाः शूराः करूषस्याभवन् सुताः ते तु सप्तशता वीरास्तेभ्यश्चान्ये सहस्रशः १ दिष्टपुत्रस्तु नाभागः
स्थितः प्रथम यौवने ददर्श वैश्यतनयामतीव सुमनोहरां २ तस्यां स दृष्टमात्रायां मदनाक्षिप्तमानसः ॥
बभूव नृप तनयो निः [illegible] ३ [illegible] वव्रे तां वैश्य कन्यकां ततो ऽनङ्गपराधीन

मा॰ पु॰ मनो हर्त्तिं नृपात्मजं ५ तच्चाह स पिता तस्या राजपुत्रं कृताञ्जलिः विस्मृतस्य पितुर्विप्र भ्रश्रया वनतं वचः
२५५ ५ भवन्तो भूभुजो भृत्या वयं वः करदायकाः कथं सम्बन्धमस्माभिरभिवाञ्छसि ६ राजपुत्र उवाच
साम्यं मानुष देहस्य काम मोहादिभिः कृतं तथापि कालेते रेव योज्यन्ते मानुषं वपुः ७ तथैव चोपकाराय
जायन्ते तस्य तान्यपि अन्यानि चान्ये जीवन्ति भिन्न जाति मतां सतां ८ तथान्यानप्ययोग्यानि योग्यतां
यान्ति कालतः योग्यान्य योग्यतां यान्ति कालवश्या हि योग्यता ९ आप्याय्यते यच्छरीरमाहारादिभि
रीप्सितैः कालं ज्ञात्वा तथा भुक्तं तदेव परिशिष्यते १० इत्थं मनेश्वाभिमता तनया दीयतां त्वया अन्य-
थाम च्छरीरस्य विपत्तिरुपलक्ष्यते ११ वैश्य उवाच परतन्त्रा वयं त्वञ्च परतन्त्रो महीभुजः पित्रा तेना
भ्यनुज्ञातस्त्वं गृहाण ददाम्यहं १२ राजपुत्र उवाच प्रष्टव्याः सर्व्वकार्य्येषु गुरवो गुरुवर्त्तिभिः नत्वीदृ-
शेषु कार्य्येषु गुरूणां वाच्यगोचरः १३ क्व मन्मथकथालापो गुरूणां श्रवणं कथं विरुद्धमेतदन्यत्र ।
٢٠٠ प्रष्टव्या गुरवो नृभिः १४ वैश्य उवाच एवमेतत्स्वगालापस्तवाय पृच्छतो गुरुं अहं पृच्छामि नालापो
मम कामकथाश्रयः १५ मार्कण्डेय उवाच इत्युक्तः सोऽभवन्मौनी राजपुत्रः स चापि तत् तत्पित्रे स-
र्व्वमाचष्ट राजपुत्रस्य यन्मतं १६ ततस्तस्य पिता विप्रानृचीकादीन् द्विजोत्तमान् प्रवेश्य राजपुत्रञ्च यथा
ख्यातं न्यवेदयत् १७ निवेद्य च ततः प्राह मुनीनेव व्यवस्थितः यत्कर्त्तव्यं तदादेष्टुमर्हन्ति द्विजसत्तमाः १८
ऋषय ऊचुः राजपुत्रानुरागस्ते यद्यस्यां वैश्य सन्ततौ तदस्तु धर्म एवैष किन्तु न्यायक्रमेण सः ॥ १९ ॥
मूर्द्धाभिषिक्त तनया पाणिग्राहोऽभवत्पुरा भवत्वनन्तरञ्चेयं तव भार्या भविष्यति २० एवं न दोषो भ-
वति तथैमामुपभुञ्जतः अन्यथाऽस्येति तेजाति रुत्कृष्टा बालिकां हरन् २१ मार्कण्डेय उवाच इत्यु-
क्तस्तदपास्यैव वचस्तेषां महात्मनां विनिष्क्रम्य गृहीत्वा तां सुधृता सिरथाब्रवीत् २२ राक्षसेन विवाहेन
मया वैश्य सुता हृता यस्य सामर्थ्यं मत्रास्ति स सतां मोचयत्विति २३ ततः स वैश्यः स्वां दृष्टा गृहीतां तनयां
مارکنڈے پوران सुतं त्राहीति पितरन्तस्य ययौ शरणं द्विज २४ ततस्तस्य पिता क्रुद्ध आदिदेश बलं महत् हन्यतां हन्यतां

दृष्टो नाभागो धर्मदूषकः २५ ततस्तद्युयुधे सैन्यं तेन भूपसुतेन वै हतं स्वेन तदा स्वेन तस्याचुर्येण पाति-
तं २६ स श्रुत्वा निहतं सैन्यं राजपुत्रेण भूपतिः स्वयमेव ययौ योद्धुं स्वसैन्यपरिवारितः २७ ततो युद्धमभूत्त
स्य भूभुजः स्वसुतेन यत् राजपुत्रेण शस्त्रास्त्रैस्तत्राति श्रमितः पिता २८ ततोऽन्तरिक्षादागत्य परिव्राट्
सहसा मुनिः प्रत्युवाच महीपालं विरमस्वेति संयुगात् २९ त्वत्पुत्रस्य महाभाग विधर्मोऽयं महात्मनः॥
तथापि वैश्येन सह न युद्धं धर्मवन्नृप ३० ब्राह्मणो ब्राह्मणीं पूर्व्वं कुर्व्वन्दारपरिग्रहं ब्राह्मण्यात्सर्व्ववर्णेषु न
हानिमुपगच्छति ३१ तथैव क्षत्त्रियसुतां क्षत्त्रियः पूर्व्वमुद्वहन् इतरे च ततो राजंश्चावन्तेन स्वधर्मतः॥३२॥
पूर्व्वं वैश्यस्तथा वैश्यां पश्चात् शूद्रकुलोद्भवां न हीयते वैश्यकुलादयं न्यायः क्रमोदितः ३३ ब्राह्मणाः स-
त्रियां वैश्या सवर्णां पाणिसंग्रहं अकृत्वाऽन्यतरापाणेः पतन्ति नृप संग्रहात् ३४ यस्या यस्या हि हीनायाः
कुरुते पाणिसंग्रहं अकृत्वा वर्णसंयोगं सोऽपि तद्वस्तु भाग्भवेत् ३५ सोऽयं वैश्यत्वमापन्नस्तव पुत्रः सम
न्वीः नास्याधिकारो युद्धाय क्षत्त्रियेण त्वया सह ३६ वयमेतन्न जानीमः कारणं नृपनन्दन यथा भवि-
ष्यतीदमत्र निवर्त्तस्वाकर्मतः ३७ इति श्री मार्कण्डेयपुराणे नाभागचरिते ११३ मार्कण्डेय उवाच॥
निहतोऽसौ ततो भूयः संग्रामात् स्वसुतेन वै उपयेमे च तां वैश्यतनयां सोऽपि तत्सुतः १ ततः स वैश्यतां प्राप्तः
समुपेत्याह पार्थिवं भूपाल यन्मया कार्य्यं तत्समादिश्यतां मम २ राजोवाच धर्माधिकरणे मुक्ता बाभ्र
व्या ह्यास्त पस्विनः यदस्य कर्म धर्मार्थं तद्वस्तु तथा चर ३ मार्कण्डेय उवाच ततस्ते मुनयस्तस्य पाशुपा
ल्यं तथा कृषिं वाणिज्यञ्च परं धर्ममाचचक्षुः सभासदः ४ तथा च चक्रे सकुलस्तस्य राज्ञो यथोदितं॥
तैर्धर्मवादिभिर्धर्मे च्युतस्य निजधर्मतः ५ तस्य पुत्रस्ततो जातो नाम्ना ख्यातो भनन्दनः समात्रा ब्रहि-
तोऽगच्छ गोपालो भव पुत्रक ६ मात्रा तथा नियुक्तोऽथ प्रणिपत्य स्वमातरं राजर्षिं नगमन्नीपं हिम
वत्पर्व्वताश्रयं ७ तं समेत्य स जग्राह तस्य पादौ यथाविधि प्रणिपत्याह चैवैनं राजर्षिं स भनन्दनः॥८॥
आदिष्टो भगवन्मात्रा गोपालत्वं [illegible] यथा च पालनीया गावस्तस्याः स्त्रीकरणं कथं ९ मयाहि-

गौः पालनीया सा यदा स्त्री हृता भवेत् आक्रान्ता बलवद्भिः सा दायादैः पृथिवी मम १० तां यथा प्राप्नुयां॰
पृथ्वीं त्वत्प्रसादादहं विभो तथा दिशा करिष्यामि तवाज्ञां प्रणतोऽस्मि ते ११ मार्कण्डेय उवाच ततः स-
नीपो राजर्षिस्तस्मै निरवशेषतः भनन्दाय ददौ ब्रह्मन्नस्त्रग्रामं महात्मने १२ प्राप्तास्त्रविद्यः स ययौ पितृ॰
व्यतनयान् द्विजः वसुरातादिकान् पुत्रानादिष्टः स महात्मना १३ अयाचत स राज्यार्द्धं पितृपैतामहोचितं
ते चोचुर्वैश्य पुत्रस्त्वं कथं भोक्ष्यसि मेदिनीं १४ ततस्ते युद्धमभवद्भनन्दस्यात्मवंशजैः वसुरातादिभिः॰
क्रुद्धैः हतास्तस्यास्त्रवर्षिभिः १५ स जित्वा तानशेषांस्तु शस्त्रविक्षतसैनिकान् जहार पृथिवीं तेषां॰
धर्मयुद्धेन धर्मवित् १६ स निर्जितारिः सकलां पृथ्वीं राज्यं तथा पितुः निवेदयामास ततस्तत्पिता जगृहे न च
प्रत्युवाच च तं पुत्रं भार्य्यायाः पुरतस्तदा १७ नाभाग उवाच भनन्द राज्यमेतत्ते क्रियतां पूर्व्वजैः कृतं १८
राजोवाच अहं न तात वान्ताज्यं नाशामस्य श्रुतः पुरा वैश्यतां तु पुरस्कृत्य तथैवाज्ञाकरः पितुः १९ कृत्वा
۲۵۸ ऽप्रीतिं पितुरहं वैश्यकन्यापरिग्रहात् न पुराय लोकभाग्राजा यावदाहूतसंप्लवः २० उल्लङ्घ्याज्ञां पुनस्तस्य
पालयामि महीं यदि नास्ति मोक्षस्ततो नूनं मम कल्पशतैरपि २१ न चापि युक्तं त्वद्दाहृतनिर्जितं मम मानि-
नः राज्यं भोक्तुमनीहस्य दुर्बलस्येह कस्यचित् २२ राज्यं कुरु स्वयं यावद्दायादेभ्यो विमुञ्चवा ममाज्ञापा-
लनं प्रशस्तं पितुर्न क्षितिपालनं २३ मार्कण्डेय उवाच ततः प्रहस्य तद्भार्य्या सुप्रभानाम भाविनी प्रत्यु
वाच पतिं भूप गृह्यतां राज्यमूर्जितं २४ नत्वं वैश्यो न चैवाहं जाता वैश्यकुले नृप क्षत्रियस्त्वं तथैवाहं॰
क्षत्रियाणां कुलोद्भवा २५ पूर्व्वमासीन्महीपालः सुदेव इति विश्रुतः तस्याभूच्च सखा राज्ञो धूम्राश्वस्य
सुतो नलः २६ स तेन सख्या सहितो जगामाश्रवनं वनं पत्नीभिः स समं रन्तुं माधवे मासि पार्थिव॥ २७॥
ततः पानान्यनेकानि भक्ष्याणि बुभुजे तथा भार्य्याभिः सहितस्ताभिस्तेन सख्या समन्वितः ॥ २८॥
ततः पुष्करिणी तीरे ददर्शाति मनोरमां पत्नी च्यवनपुत्रस्य प्रमतेः पार्थिवात्मजां २९ सखा तस्य नलो
مارکنڈی پ मत्तो जगृहे तां च दुर्मतिः पश्यतस्तस्य राज्ञश्च त्रात त्रातेति वादिनीं ३० आक्रन्दितं निशम्यैव स ततस्या॰

अमे तस्य वर्द्धमाना दिवानिशं सखीभिः सह तुल्याभिर्विचरामि वनानि च १५ ततो मुनेरगस्त्यस्य भ्राताग-
स्त्य इति श्रुतः सञ्चिन्वन् कानने वन्यं सखीभिः कोपितो ऽभवत् १६ नापराधं कृतवती ताहं द्विजसत्तम
अन्यासामपराधेन किमर्थं शप्तवानसि १७ ऋषिरुवाच दुष्टतां दुष्टसंसर्गाददुष्टमपि गच्छति सुराबि-
न्दुनिपातेन पञ्चगव्यघटी यथा १८ प्रशिापत्य न दुष्टास्मि यत्त्वयाहं प्रसादितः तस्मादनुग्रहं बाले कृपा
यत्ते करोम्यहं १९ वैश्ययोनौ यदा जाता त्वं पुत्रं बोधयिष्यसि राज्याय जातिस्मरतां तदा त्वं समवाप्स्यसि।
२० ततो भूयः स्वजातिं प्राप्ता त्वं पतिना सह दिव्यानवाप्स्यसे भोगान् गच्छ भीतिर्येतु ते २१ एवं शप्ता-
स्मि राजेन्द्र तेन पूर्वं महर्षिणा पिता च मे पूर्वमेवं शप्तः प्रमतिना ऽभवत् २२ एवं वैश्यो न राजा त्वं न च।
वैश्यः पिता मम नत्वं हि मय्यदुष्टायामदुष्टो दुष्यसे कथं २३ इति श्रीमार्कण्डेयपुराणे पञ्चदशाधिक
शततमो ऽध्यायः ११५ मार्कण्डेय उवाच इति तस्या वचः श्रुत्वा पुत्रस्य स च पार्थिवः पुनः प्रोवाच।
धर्मज्ञस्तां पत्नीं तनयन्तथा १ यन्मया पितुरादेशात्त्यक्तं राज्यं न तत्पुनः ग्रहीष्यामि वृथोक्तेन किमात्मा
ऽक्लिश्यते त्वया २ अहं ते संप्रदास्यामि करं वैश्यव्रते स्थितः भुङ्क्ष्व राज्यमशेषं त्वमिच्छया वा परित्यज ३
इत्युक्तः स तदा पित्रा राजपुत्रो भलन्दनः चकार राज्यं धर्मेण तद्दार परिग्रहं ४ अव्याहतं तस्य चक्रं पृथि-
व्यामभवद्द्विज न चाधर्मे मनो भूपास्तस्य सर्वे ऽभवन् वशे ५ तेनेष्टो विधिवद्यज्ञः सम्यक् शास्ति वसुन्ध-
रां स सर्वेको ऽभवद्भर्त्ता पृथिव्यां व्याप्तशासनः ६ अजायत सुतस्तस्य वत्सप्रीर्नाम नामतः पिताति शा-
यितो येन गुणौ येन महात्मना ७ तस्यापि भार्य्या सौनन्दा विदूरथसुता ऽभवत् पतिव्रता महाभागा सा।
प्राप्ता तेन वीर्य्यतः हत्वा पुरन्दररिपुं कुजम्भं दितिजेश्वरं ८ क्रौष्टुकिरुवाच भगवंस्तेन सं प्राप्ता कुजृम्भ
निधनात्कथं एतदाख्यानमाख्याहि प्रसन्नेनान्तरात्मना ९ मार्कण्डेय उवाच विदूरथो नाम नृपः ख्यात
कीर्त्तिर्भुवि तस्य पुत्रद्वयं जातं सुनीतिः सुमतिस्तथा १० एकदा तु वनं यातो मृगयां स विदूरथः ददर्श
गर्त्तं सुमहद्भूमेर्मुखमिवोद्गतं ११ तं दृष्ट्वा चिन्तयामास किमेतदिति भैरवं पातालविवरं मन्ये नैतद्भूमे।

श्चिरन्तनं १२ चिन्तयन्निति तत्रासौ ददर्श विजने वने ब्राह्मणं सुव्रतं नाम तपस्विन मुपागतं १३ सत्तप-
प्रच्छ च नृपः किमेतदिति विस्मितः अति गम्भीर मवनेर्दर्शितान्तर्गतोदरं १४ किन्न वेत्सि महीपाल वा-
गर्थस्त्वं हि मे मतः ज्ञेयं सर्व्वं नरेन्द्रेण वर्त्तते यन्महीतले १५ दानवः सुमहावीर्य्यो वसत्युग्रो रसातले ॥
सत्त्रासयति यत्पृथ्वीं कुजृम्भः प्रोच्यते तनः १६ क्रियते तेन यत्किञ्चिद्भूतं भूतं महीतले त्रिदिवेवा-
नरपते तं कथं वेत्ति नो भवान् १७ सुनन्दं नाम मुशलं त्वष्ट्रा यन्निर्मितं पुरा तज्जहार स दुष्टात्मा तेन हन्ति ।
रणोऽरिशून् १८ पातालान्तर्गतस्तेन भिनत्ति वसुधामिमां ततोऽसुराणां सर्व्वेषां द्वाराणि कुरुतेऽसुरः
१९ तेन भिन्ना च वसुधा सुनन्द मुशलायुधा भोक्ष्यते वसुधा मे तां तम जित्वा कथं भवान् २० अज्ञान् ।
विर्द्धं सयत्सुग्रो देवानामुपरोधकः आप्यायायाति दैत्येयान् स वली मुशलायुधः २१ यच्चारिं घातयस्ये-
नं पातालान्तर गोचरं ततः समस्तवसुधापतिस्त्वं परमेश्वरः २२ मुशलन्तस्य वलिनः सौनन्दं प्रोच्यते
जनैः तथा वलावलञ्चैव तं वदन्ति विचक्षणाः २३ तत्तु निर्वीर्य्यतां याति संस्पृष्टं योषिता नृप तस्मिन्दि-
ने द्वितीयेऽन्हि वीर्य्यवत्तदुदीर्य्यते २४ न संवेत्ति दुराचारः प्रभावं मुशलस्य तत् योषित्करात्र संस्पर्शदोषं
वीर्य्य विशातनं २५ एवं तस्य वलं भूप दानवस्य दुरात्मनः मुशलस्य च ते प्रोक्तं यदुक्तं तत्समाचर २६
आसन्न मे तद्भवतः पुरस्य पृथिवीपते छतन्नेन महीरन्ध्रं निश्चिन्तः किं भवान्यथा २७ इत्युक्ता तु गते
तस्मिन् पुरं गत्वा महीपतिः मन्त्रयामास मन्त्रज्ञैः पुरमध्ये तु मन्त्रिभिः २८ यथा श्रुतमशेषन्तन्त्र
कथयामास मन्त्रिणां मुशलस्य प्रभावञ्च वीर्य्यशातनमेव च २९ तं मन्त्रं क्रियमाणान्तु मन्त्रिभि-
स्तेन भूभृता तत्या र्श्ववर्त्तिनी कन्या शुश्राव थ मुदावती ३० ततः कतिपयाहे तु तां कन्यां सप्त सा-
न्वितां जहारोपवनादैत्यः कुजृम्भः समरवीद्वृत्तां ३१ ततः श्रुत्वा महीपालः क्रोधपर्य्याकुले-
क्षणः पुत्रावुवाच त्वरितं गच्छ तं वन कोविदो ३२ निर्विन्ध्यायास्तटे गर्त्तस्तेन गत्वा रसातलं सह-
न्यतां योऽपहृत्ता मुदावत्या मदत्संतिः ३३ मार्कण्डेय उवाच ततस्तौ तत्सुतौ प्राप्य तं गर्तं तत्परानु

۲۶۰ مارکنڈے پران

गो युयुधाते कुजृम्भेन स्वसैन्येनातिकोपितो ३४ ततः परिघनिस्त्रिंशशक्तिशूलपरश्वधैः बाणो
ग्रा विरतं युद्धं तयोरासीत् सुदारुणं ३५ ततो मायाबलवता तेन दैत्येन तावुभौ राजपुत्रौ रणे बद्धौ नि
हता शेषसैनिकौ ३६ तच्छ्रुत्वा स महीपालः प्राहेदं सर्व्वसैनिकान् बद्धपुत्रः परामार्त्तिमुपेतो मुनि
सत्तम ३७ यस्तं निहत्य दैतेयं मोचयिष्यति मे सुतं तस्याहं सं प्रदास्यामि तामेवायतलोचनां॥३८॥
इत्येवं घोषयाञ्चक्रे स राजा स्वपुरे तदा निराशः पुत्रतनयाबन्धमोक्षाय वै मुने ३९ ततः शुश्राव वत्स
प्री नन्दनसुतो हि तत् आधोव्य मायां बलवान् कृतास्त्रः शौर्य्यसंयुतः ४० सचागम्याभिवाद्यैनं
प्राह पार्थिवसत्तमं विनयावनतो भूत्वा पितुर्मित्रमनुत्तमं ४१ आज्ञापयाशु मामेव तनयौ मोचयामि
ते तनैव तेजसा हत्वा तं दैत्यं तनयाञ्च ते ४२ मार्कण्डेय उवाच सतं सुदा परिष्वज्य प्रियसख्युः सुताल
जं आम्यतामिति सं सिध्येत्युक्त्वेत्याह स पार्थिवः ४३ स्थाने स्थास्यति मे वत्सो यद्येवं कुरुते विधिं वत्से
२५१ तत्क्रियतामाशु यच्चुस्त्वाहि मनस्तव ४४ मार्कण्डेय उवाच ततः स खड्गः सधनुर्देहगोधाङ्गुलित्रवा
न् जगाम वीरः पातालं तेन गर्त्तेन सत्वरः ४५ ततो ज्यास्वनमत्युग्रं स चक्रे पार्थिवात्मजः येन पाताल
मखिलमासीदापूरितान्तरं ४६ ततो ज्यास्वनमाकर्ण्य कुजृम्भो दानवेश्वरः आजगामातिकोपेन
स्वसैन्यपरिवारितः ४७ ततो युद्धमभूत्तस्य तेन पार्थिवसूनुना ससैन्यस्य ससैन्येन बलिनो बलशा
लिना ४८ दिनानि त्रीणि स यदा योधितस्तेन दानवः ततः कोपपरीतात्मा मुशलायाभ्यधावत॥
४९ गन्धैर्माल्यैस्तथा धूपैः पूज्यमानः सतिष्ठति अन्तःपुरे महाभाग प्रजापतिविनिर्मितः ५० ततो
विशालमुशलप्रभावा सा कुरङ्गवती पस्पर्श मुशलश्रेष्ठमतिनम्रशिरोधरा ५१ पुनर्यावत्स गृह्णा-
ति मुशलं तं महासुरः तावत् सा वन्दनव्याजात् पस्पर्शानेकशः शुभा ५२ ततः स गत्वा युयुधे
मुशलेनासुरेश्वरः व्यर्थाः मुशलपातास्ते सं जग्मुस्तेयु शत्रुषु ५३ परमास्त्रे तु निर्वीर्य्ये सोऽनन्दमु-
शले मुने अस्त्रैः शस्त्रैश्च दैतेयः सोऽयुध्यतरोऽरिणा ५४ शस्त्रास्त्रैस्तैर्न समस्तस्य राजपुत्रस्य सो

مارکنڈی پوران

नाःपुत्र महात्मना ७५ तदा तु विषये तस्य न चाभूद्वर्णसङ्करः नदस्तु व्याल दुर्वृत्त भयमासीन्न कस्यचित् ॥
२६ शाप सर्गा भयश्चैव तस्मिन् शासति भूपतौ ७६ इति श्री मार्कण्डेय पुराणे भनन्दन वत्सश्री चरितं नाम ११७
र्कण्डेय उवाच तस्य तस्यां सुनन्दायां पुत्रा द्वादश जज्ञिरे प्रांशुः प्रवीरः शूरश्च सुचक्रो विक्रमः क्रमः
बली बलाक चण्डश्च प्रचण्डश्च सुविक्रमः स्वरूपश्च महाभागाः सर्व्वे संग्राम जित्तमाः २ तेषां
प्रांशुर्महा वीर्य्यः प्रांशुरासीन्नराधिपः इतरे भृत्य वत्तस्य बभूवुर्व्वश वर्त्तिनः ३ तस्य यज्ञे द्विजत्येभ्यो
नकोड्य राशिभिः न्यून वर्णा विस्रष्टेश्च सत्य नामा वसुन्धरा ४ सस्यवत् पालयत्तस्य प्रजाः पुत्रानि-
रस्मात् यो ऽभूदनघयः कोप्यतेन निष्पादिता स्तुये ५ क्रतवः शत साहस्रास्तेषां संख्या न विद्यते ॥
सुता येन कोटी भिर्नं च यज्ञादि भिर्मुने ६ प्रजातिस्तस्य पुत्रो ऽभूद्यस्य यज्ञेषु न क्रतुः अवाप्य तृप्ति
तुलां यत्र भागैः सुरैः सह ७ शतदानां सुवीर्य्याणां जघान नवतीर्नव बलञ्च वालिनां श्रेष्ठो जम्भञ्च
२५१ सुरसत्तमं ८ अन्याश्च सुमहा वीर्य्यान्नाजघानामरद्विषः प्रजातेस्तनयाः पञ्च खनित्र प्रमुखा मुने ९
यां खनित्रो राजा भूत् प्रख्यातो निज विक्रमैः सुशान्तः सत्यवाक् शूरः सर्व्व प्राणि हितेरतः ॥ १० ॥
स्वधर्मा भिरतो नित्यं वृद्ध सेवी बहुश्रुतः वाग्मी विनय संपन्नः कृतास्त्रो ऽप्य विकत्थनः ११ सर्व्वलो-
कप्रियो नित्य सुवाचे तदहर्निशं नन्दन्तु सर्व्व भूतानि स्निह्यन्तु विजने ष्वपि १२ स्वस्त्यस्तु सर्व्व भूतेषु
निरातङ्कानि सन्तु च माव्याधिरस्तु भूतानामाधयो न भवन्तु च १३ मैत्रीमशेष भूतानि पुष्यन्तु सक-
ले जने शिवमस्तु द्विजातीनां प्रीतिरस्तु परस्परं १४ समृद्धिः सर्व्व वर्णानां सिद्धिरस्तु च कर्मणां ते-
लोकाः सर्व्वे भूतेषु शिवा वो ऽस्तु सदा मतिः १५ यथात्मनि तथा पुत्रे हितमिच्छथ सर्व्वदा तथा समस्त
भूतेषु वर्त्तध्वे हित बुद्धयः १६ एतद्वो हित मत्यन्तं को वा कस्यापराध्यते यत्करोत्यहितं किञ्चित्कस्य
चिन्मूढ मानसः १७ तं समभ्येति तन्नूनं कर्त्तृ गामि फलं यतः इति मत्वा समस्तेषु भो लोकाः कृतबु-
द्धयः १८ सन्तु मा लौकिकं पापं लोकाःप्राप्स्यथ वैबुधाः यो मे ऽद्य स्निह्यते तस्य शिवमस्तु सदा भुवि श्रे

भु० यश्च मां द्वेष्टि लोकेऽस्मिन् सोऽपि भद्राणि पश्यतु एवं स्वरूपः पुत्रोऽभूत् खनित्रस्तस्य भूपतेः २० सम-
५४ स्तगुणसम्पन्नः श्रीमानभ्रदलेक्षणः तेन ते भ्रातरः प्रीत्या पृथक् प्रान्तेषु योजिताः २१ स्वयञ्च पृथिवी
मेतां बुभुजे सागराम्बरां प्राच्यां तेन कृतः शौरिर्दक्षिणायां सुदा वसुः २२ दिशि प्रतीच्यां सुनय उत्तरस्यां
महारथः तेषां तस्य च भूपस्य पृथग्गोत्राः पुरोहिताः २३ बभूवुः सुनयश्चैव मन्त्रिवंशक्रमागताः शौरेः
रत्रिकुलोद्भूतः सुहोत्रो नाम वै द्विजः २४ उदावसोः कुशानन्दो गौतमान्वयजो ऽभवत् काश्यपः प्रमतिर्ना-
म सुनयस्य पुरोहितः २५ महारथस्य वाशिष्ठः पुरोधाः सूत्महीभृतः बुभुजुस्ते स्वराज्यानि चत्वारोऽपि
नराधिपाः २६ खनित्रश्चाधिपस्तेषामशेषवसुधाधिपः तेषु भ्रातृष्वशेषेषु खनित्रः स महीपतिः २७
प्रजासु च समस्तासु पुत्रेष्विव सदा हितः एकदा मन्त्रिणा शौरिः स प्रोक्तो विश्ववेदिना २८ विविक्ते
पृथिवीपाल किञ्चिद् वक्तव्यमस्ति नः यस्येयं पृथिवी कृत्स्ना यस्य भूपा वशानुगाः २९ स राजा तस्य
पुत्रश्च तत्पौत्राश्चान्वयस्ततः इतरे भ्रातरस्तस्य प्राक्कल्पविषयाधिपाः ३० तत्पुत्राश्चाल्पकस्तस्मात्
तत्पौत्राश्चाल्पकाल्पिकाः कालेन ह्रासमायाति पुरुषात् पुरुषान्तरं ३१ कृष्योपजीविनो भूप भवन्ती
ति तदन्वयाः नोपकारं कुरुते भ्राता भ्रातृस्नेहबलार्पिताः ३२ स्नेहकः पृथिवीपाल यदि भ्रातृपुत्रयोः
तत्पुत्रयोः परतरा मतिर्भवति पार्थिव ३३ तत्पुत्रः केन कार्य्येण प्रीतियुक्तो भविष्यति अथवा येन
तेनैव सन्तोषं कुरुते नृपः ३४ क्रियते तत् किमर्थन्तु भूपे मन्त्र परिग्रहः भुज्यते सकलं राज्यं मया ते
मन्त्रिणा सता ३५ तत् किं सुखावायमसे सन्तोषं कुरुते यदि कार्य्यं निष्पादकं राज्ये करणं कर्तुरिष्यते
३६ राज्यलुब्धश्च ते कार्य्ये त्वं कर्त्ता करणं वयं सोऽस्माभिः करणै राज्यं पितृपैतामहं कुरु फल प्रसाभावे
स्थामः परलोके न ते वयं ३७ राजोवाच ज्येष्ठो राजा महीपाल वयन्त्वस्यानुजायतः ततः स भुंक्ते पृथि-
वीं वयञ्चाल्पवसुन्धरां ३८ वयन्तु भ्रातरः पञ्च पृथ्वी चैका महामते अतोऽस्याः पृथगैश्वर्य्यं कथं
कृत्स्नं भविष्यति ३९ विश्ववेद्युवाच एवमेतद्भवांस्तत्र यद्येको वसुधान्नृप तां त्वमेवाभिपद्यस्व ज्येष्ठ

या चतुष्टयं मत्तः कोऽन्यः पापतरो भविष्यति पुमान् भुवि १० नाभविष्यं यदि पुमानहमत्र महीतले॥
ततस्ते न विनश्येयुर्मम भ्रातृपुरोहिताः ११ धिग्राज्यं धिक् च मे जन्म भूभुजां महतां कुले कारणत्वंग-
तोयोऽहं विनाशस्य द्विजन्मनां १२ कुर्वन्तः स्वामिनां तेऽर्थे भ्रातृणां मम याजकाः नाशं ययुर्न दुष्टा
स्ते दुष्टोऽहं नाशकारणं १३ किं करोमि क्व गच्छामि नान्यो मत्तोहि पापकृत् पृथिव्यामस्ति हेतुत्वं
द्विजनाशस्य योगतः १४ इत्थं सुदुःखितहृदयः खनित्रः पृथिवीपतिः वनं यियासुः पुत्रस्य कृतवान
भिषेचनं १५ अभिषिच्य सुतं राज्ये क्षुपसंज्ञं महीपतिः भार्याभिस्तिसृभिः सार्द्धं तपसे स वनं ययौ॥
१६ तत्र गत्वा तपस्तेपे वाराणप्रस्थविधानवित् शतानि त्रीणि वर्षाणां साग्राणि नृपसत्तमः १७ तपसा
क्षीणदेहस्तु राजवर्य्यो द्विजोत्तम निगृह्य सर्व्वस्रोतांसि तत्याजासून् वनेचरः १८ ततः पुण्यान
ययौ लोकान् सर्व्वकामदुहोऽक्षयान् अश्वमेधादिभिर्यज्ञैरवाप्या ये नराधिपैः १९ भार्य्याश्च तस्य
२५५ तास्तिस्रः समस्तेनैव तत्यजुः प्राणान् चापुः समालोक्यं तेनैव सुमहात्मना २० स तत् खनित्रचरितं
श्रुतं कल्मषनाशनं पठताञ्च महाभाग क्षुपस्यातो निशामय २१ इति श्रीमार्कण्डेयपुराणे ख-
नित्रचरितं समाप्तं ११९ मार्कण्डेय उवाच क्षुपः खनित्रपुत्रस्तु प्राप्य राज्यं यथा पिता तथैव पा-
लयामास प्रजा धर्मेण रञ्जयन् १ स दानशीलो यष्टा च यज्वा नाम वनीपतिः समः शत्रौ च मित्रे च व्यव-
हारादिवर्त्मनि २ एकदा स महीपालो निजस्थानगतो मुने सूतैरुक्तो यथा पूर्व्वं क्षुपो राजा तथाऽभ-
वत् ३ ब्रह्मणस्तनयः पूर्व्वं क्षुपोऽभूत् पृथिवीपतिः यादृक् चरितमस्यासीत्तादृक् तस्यैव चेष्टितं॥ ४॥
राजोवाच श्रोतुमिच्छामि चरितं क्षुपस्य सुमहात्मनः यदि तादृङ्मया शक्यं चेष्टितुं तत्करोम्यहं ५
सूता ऊचुः स चकार करान् भूप राजा गो ब्राह्मणान् पुरा यष्टा येन कृता चोर्व्यां मिष्टिस्तेन महात्मना
६ राजोवाच तेषां महात्मनां राज्ञां कोऽनुयास्यति मद्विधः तथा पुत्त्रकृष्टचेष्टानां चेष्टा सद्यमवान्
भवेत ७ ततश्रूयतां प्र[illegible]रिष्यामि महाराजस्य चेष्टितं ॥ ८ ॥

मार्कنڈے پوران

त्रींस्त्रीन यज्ञान् करिष्यामि शस्यापाते गतागते पृथिव्यामन्नतुराणां यां प्रतिज्ञेयं कृता मया ॥ ९ ॥
यच्च गोब्राह्मणाः पूर्वमददन् भूभृते करं तमेव प्रति दास्यामि ब्राह्मणानां तथा गवां १० मार्क-
ण्डेय उवाच इति प्रतिज्ञाय वचः सुपस्त्वान्तवांस्तथा शस्यापाते स यज्ञांस्त्रीनयजद्द्विजतोवरः ॥
११ गोब्राह्मणाः पुरा राज्ञा मदद्यच्चैव करं तावत्तं स्वयमदाद्वित्तमन्यन्नो ब्राह्मणाय सः १२ तस्य
पुत्रोऽभवद्वीरः प्रमथायामनिन्दितः तस्य प्रतापशौर्याभ्यां कृता वश्या मही भृतः १३ तस्यापि
नन्दिनी नाम वैदर्भी दयिताऽभवत् विविंशं तनयं तस्यां जनयामास स प्रभुः १४ विविंशे शासति
महीं महीपाले महौजसि महीतलमभूद्व्याप्तं निरन्तरतया नरैः १५ ववर्ष काले पर्जन्यो मही शस्यव-
तीतथा सुफलानि च शस्यानि रसवन्ति फलानि च १६ रसाः पुष्टिकराश्चासन् पुष्टिर्नोन्मादकारिणी
न वित्तनिचया न्दृणां प्रभूता मदहेतवः १७ तत्प्रतापेन रिपवो भयमापुर्महामुने स्वास्थ्यं जनः सु
२५८ हृद्वर्गो मुदमिच्छन्ति पौरिकाः १८ इष्ट्वा स यज्ञान् सुबहून् सम्यक् सम्पाल्य मेदिनीं संग्रामे निधनं
प्राप्य स्वर्गलोकमितो गतः १९ इति श्री मार्कण्डेय पुराणे विविंश चरितं समाप्तं १२० मार्कण्डेय उवा-
च तस्य पुत्रः खनीनेत्रो महाबलपराक्रमः यस्य यज्ञेषु गायन्ति गन्धर्वा विस्मयान्विताः १ खनीनेत्रस-
मो नान्यो भुवि यज्वा भविष्यति तेन यज्ञायुते पूर्णे दत्ता पृथ्वी ससागरा २ दत्वा च सकलां पृथ्वीं ब्राह्मणा-
नां महात्मनां तपसा द्रव्यमासाद्य मोचयत्साधिते नयः ३ यत्तश्च प्राप्य वित्तं हि मतुलं दात सत्तमात्
जगृहुर्ब्राह्मणा विप्र नान्यराज्ञः प्रतिग्रहं ४ सप्तषष्टि सहस्राणि सप्तषष्टि शतानि च सप्तषष्टिश्च योऽय-
ज्ञानयजद्भूरिदक्षिणान् ५ अपुत्रः स महीपालो मृगयामुपचक्रमे पुत्रार्थं पितृयज्ञाय मांसकामो महा
मुने ६ अश्वारूढो विना सैन्यमेक एव महावने बद्धगोधाङ्गुलित्राणो वाणखङ्गधनुर्धरः ७ तं वाहय-
न्तं तुरगमन्यतो गहनाद्वनात् विनिष्क्रम्य मृगः प्राह मां हत्वाभिमतं कुरु ८ राजोवाच अन्ये मृगाः
पलायन्ते महाभीत्या विलोक्य मां कथमात्मप्रदानं त्वं मृत्यवे कर्तुमिच्छसि ९ मृग उवाच अपुत्रो

ऽहं महाराज हृथा जन्म प्रयोजनं विचारयन्न पश्यामि प्राणानां सिंह धारणं १० मार्कण्डेय उवाच ॥
अथाश्येत्य मृगः प्राह तमन्यो वसुधाधिपं मृगस्य तस्य प्रत्यक्ष मल मेतेन पार्थिव ११ घातयस्वेतिमां
मांसैर्मम कर्म समाचर यथा हृतार्थता तेस्यान्मम चाप्युपकारितत् १२ पुत्रार्थं त्वं महाराज रक्ष पितृन्यदृ
सिच्छसि अपुत्रस्यास्य मांसेन लप्स्यसे वाञ्छितं कथं १३ यादृक् कर्म विनिश्चाद्यं तादृक् ज्ञन्य सुपाहेत्व
दुर्गन्धेन सुगन्धानां गन्ध ज्ञान विनिर्णयः १४ राजोवाच वैराग्य कारणं प्रोक्त मनेनापुत्रता मम कथ्य
तां प्राणसंत्यागे यत्ते वैराग्य कारणं १५ मृग उवाच बहवो मे सुता भूप बह्व्यो दुहितरस्तथा यच्चिन्ता
दुःख दावाग्नि ज्वाला मध्ये वसाम्यहं १६ सर्वे साध्या नरेन्द्रेयं मृग जातिः सुकातरा तेष्वपत्येषु मे चा-
ति ममत्वं तेन दुःखितः १७ मनुष्य सिंह शार्दूल वृकादिभ्यो बिभेम्यहं नहीनात सर्व सत्वेभ्यः पृथ ग्भा-
लादपि प्रभो १८ सोऽहं निमित्तं बन्धूनामिमां शून्यां वसुन्धरां नृसिंहादि भयात् सर्वां मिच्छामि सुशूणं
 महत् १९ तृणान्यन्येऽपि खादन्ति गोऽजाविहरिणादिकाः तांस्तेषां पोषणायाहं मिच्छामि निधनं
गतान् २० निष्क्रान्तेषु ततस्तेषु ममापत्येषु वै पृथक् भवन्ति चिन्ताः शतशो ममान्या हृत चेतसः ॥ २१ ॥
किन्नु टपाशं किं वज्रं वागुरां किं सुतो मम प्राप्तः स्वन् वने किंवा नृसिंहादि वशं गतः २२ प्राप्तोऽथ मेकः
संप्राप्तस्तेऽवस्थां की दृशीं मम सान्त्वनं विचरन्तो वै येगताः सुमहावनं २३ दृष्ट्वा प्राप्त समाश्वास मह-
ज्ञानात्मजान्नृप ईषदुच्छ्वसितः सेम मिच्छामि रजनीं पुनः २४ प्रभाते दिव संसेमम स्तोकैर्निश्चामपि
वाञ्छाम्यहं कदा क्षेमं सर्व कालं भविष्यति २५ एतत्ते कथितं भूप मनो हेरास्य कारणं अतः प्रसादं
कुरु मे बाणोऽयं पात्यतां मयि २६ इति दुःख मना विप्रः प्राणान पित्यज्ञा नियत् तत्कारणं निबोध त्वं
ब्रुवतो मम पार्थिव २७ असूर्या नाम ते लोका यान् गच्छन्त्यात्मघातकाः यज्ञोपयुक्ताः पशवः संप्रया
न्त्युच्छ्रितीः प्रभो २८ अग्निः पशुरभूत् पूर्वं पशुराशी ज्वलाधिपः भास्वानथोच्छ्रितीः प्राप्तो यज्ञेनि-
 ष्ठा मुपागतः २९ तन्मे त्वां कृपां कृत्वा नय मामुच्छ्रितिं नृप आत्मनश्चेप्सितं कामं पुत्रलाभ रवा-

प्स्यसि ३० पूर्व्व मृग उवाच राजेन्द्र नैव हन्तव्यो धन्योऽयं सुकृती मृगः बहवस्तनया यस्य हन्तव्यो
ऽहमसन्ततिः ३१ उत्तर मृग उवाच एक देह भवं यस्य दुःखं धन्यः सवै भवान् बहूनि यस्य देहानि त
स्य दुःखान्यनेकधा ३२ एको यदाहमासन्तु शाक्तदा देहजं मम दुःखमासीन्ममत्वे तु भार्य्या यास्त्व
द भूद्द्विधा ३३ यदा जातान्यपत्यानि तदा यावन्ति तानिवै तावत्कारीर भूतानि मम दुःखान्यथा भवन् ३४
न कृतार्थो भवान् यस्य नास्ति दुःखाय सम्भवः इह दुःखाय मत्सूतिः परत्रे च विरोधिनी ३५ यतोऽस्मत्
पोषणार्थमपत्यानां करोमि तत् चिन्तयामि च सम्भूति स्तेनमे नरके ध्रुवा ३६ राजोवाच नवेद्मि किंमन्त्र
ति मान् धन्योऽपुत्रोऽत्र किं मृग पुत्रार्थं श्चायमारम्भो मम दोलायते मनः ३७ दुःखाय सन्ततिः सत्य
मैहिकामुष्मिकाय तत् तथाप्य तनयान् यान्ति नरकानीति श्रुतं मया ३८ सोऽहं यतिष्ये पुत्रार्थं सृते
प्राणिवधं मृग तपस्यैव प्रचण्डेन यथा पूर्व्वं महीपतिः ३९ इति श्री मार्कण्डेय पुराणे रवतो नेत्र
२५१ चरितं नाम २२१ मार्कण्डेय उवाच ततः सन्नमति गत्वा गोमतीं पापनाशिनीं तत्र तुष्टाव नियतो
भूत्वा देवं पुरन्दरं १ तप्यमानस्तमच्चो ग्रंयत वाक्काय मानसः तुष्टाव प्रयतः शक्रम पत्यार्थं मही॰
पतिः २ तस्य स्तोत्रेण तपसा भक्त्या चापि सुरेश्वरः तुतोष भगवानिन्द्रः प्राह चैनं महामुने ॥ ३ ॥
अनेन तपसा भक्त्या स्तोत्रेणो च्चारितेन च परितुष्टोऽस्मि ते भूप व्रियतां भवतावरः ४ ॥ राजोवाच ॥
अपुत्रस्य सुतो मेऽस्तु सर्व्व शस्त्र भृतांवरः सदा चाव्याहतैश्वर्य्यो धर्म्मज्ञहमवित्तज्ञः ५ मार्कण्डेय
उवाच तथेति चोक्तः शक्रेण राजा प्राप्त मनोरथः प्रजाः पालयितुं भूप आजगाम निजंपुरं ६ तत्रास्य
कुर्व्वतो यज्ञं सम्यक् पालयतः प्रजाः अजायत सुतो विप्र तदा शक्र प्रसादतः ७ तस्य नाम पिता
चक्रे बलाश्व इति भूपतिः अस्त्र ग्राममशेषञ्च ग्राहयामास तं सुतं ८ पितर्य्युपरते विप्र सोऽधि-
राज्ये स्थितो नृपः स बलाश्वो वशं निन्ये भुवि सर्व्व महीक्षितः ९ करञ्च दायया मास सार ग्रहणा पू-
र्व्वकं स सर्व्व भूमिपान् राजा पालयामास च प्रजाः १० अथाखिलनरेन्द्रास्ते दायादास्तस्य दुर्मदाः॥

न चाभ्युत्थाय सततं ते चास्मै प्रददुः करान् ११ व्युत्थिताः स्वेषु राष्ट्रेषु न सन्तोष परास्ततः भुवं तस्य।
नरेन्द्रस्य जगृहुस्ते नराधिपाः १२ स गृहीत्वास्वकं राज्यं पृथिवीशो बलान्मुने तस्थौ स्वनगरे भूपे विरो
धो बहुभिः हतः १३ समेत्य सुमहावीर्य्याः ससाधन धनास्ततः रुरुधुस्ते महीपालं पुरे तत्र नरेश्वराः
१४ पुररोधेन तेनाथ कुपितः स महीपतिः स्वल्पकोशोऽल्पदण्डश्च वैलक्ष्यं परमं गतः १५ अपश्य
मानः शरणं सबलो द्विजसत्तम करौ मुखाग्रतः हृत्वानि शश्वासातिमानसः १६ ततोऽस्य हस्त।
विरवानुखानिलसमाहताः निजग्मुः शतशो योधारथनागतुरङ्गमाः १७ ततः स्तेन तत्सर्वं।
नगरं तस्य भूपतेः व्याप्तमासीद्बलौघेन सारेणात्ति बलान्मुने १८ अथ सोऽतिबलौघेन महता तेन
सम्भृतः निर्गम्य नगरात्तस्मात्तान् विजिग्ये नराधिपः १९ जित्वा च वशमानीय चकार करदान् पुनः॥
यथा पूर्व्वं महामाया महाभागो नरेश्वरः २० धुनयोः करयोर्जज्ञे यतस्तस्यारिहा ह्हं बलं करन्धमः।
२८० स्तस्मात् स बलाग्रोऽभिधीयते २१ स धर्म्मात्मा महात्मा च सैमैत्रः सर्व्वजन्तुषु करन्धमोऽभवद्भू
पस्त्रिषु लोकेषु विश्रुतः २२ सम्प्राप्तस्य परामार्त्ति दत्तावरि विनाशनं बलन्दं मेरा चाक्षिप्तमभ्युपे
त्य स्वयं नृपं २३ इति श्री मार्कण्डेय पुराणे करन्धम चरितं समाप्तं १२२ मार्कण्डेय उवाच वीर्य्यचं
न्द्र सुता सुभूर्व्वीरा नाम शुभव्रता स्वयम्बरे सा जगृहे महाराजं करन्धमं १ तस्यां पुत्रं स राजेन्द्रो जनया
मास वीर्य्यवान् अवीक्षित मितिख्यातिं सुयेतं जगती तले २ जाते तस्मिन् सुते राजा सदैव ज्ञान पृच्छ
त कच्चित् प्रशस्त नक्षत्रे शस्त लग्ने सुतो मम ३ कच्चिच्चालोकितं जन्म मम पुत्रस्य शोभनैः ग्रहैः क
च्चिन्न दुष्टानां ग्रहाणां दृक्पथं गतं ४ इत्युक्तास्तेन दैवज्ञास्ते सूचुर्न्नृपतिं ततः शस्ते मुहूर्त्ते नक्षत्रे लग्ने
चैव सुतस्तव ५ समुत्पन्नो महावीर्य्यो महाभागो महाबलः भविष्यति महाराज महाराजस्तवात्मजः
६ अवेक्षते सेस्वाचार्य्यगुरुः शुक्रश्च सत्तमः सोमश्चतुर्थस्तनयं तवैनं समवेक्षत ७ उपान्त संस्थितश्चैव।
सोमपुत्रोऽप्यरक्षत नावेक्षते मंसविता न भौमो न शनैश्चरः ८ तव पुत्रं महाराज धन्योऽयं तनयस्तव॥



مارکنڈیو

सर्व्व कल्याण सम्पत्ति समवेतो भविष्यति ९ मार्कण्डेय उवाच इति दैवज्ञ वचनं निशम्य वसुधाधिपः हर्ष
पूर्ण मनाः प्राह निज स्थान गतस्तदा १० अवैक्षते मन्देवानां गुरुः सोमसुतो बुधः नावैक्षतेन सादित्यो नार्क
सूनुर्न भूमिजः ११ अवैक्षतेतिय त्प्रोक्तं भवद्भिर्बहुशो वचः अवीक्षितेति तेनास्य ख्यातं नाम भविष्यति
१२ मार्कण्डेय उवाच अवीक्षितः सुतस्तस्य वेद वेदाङ्ग पारगः अस्त्रग्राममशेषं स कण्वपुत्राद्यथाग्रही
त् १३ स रूपेणाति भिषजौ देवानां पार्थिवात्मजः बुद्ध्या वाचस्पतिं कान्त्या शशाङ्कं तेजसा रविं ॥ १४ ॥
धैर्य्येणाब्धिं तथोर्व्वीञ्च सहिष्णुत्वेन वीर्य्यवान् शौर्य्येणान समस्तस्य कश्चिदासीन्महात्मनः १५ स्वय-
म्वरे तञ्ज गृहे हेम धर्म्मात्मजा वरा सुदेव तनया गौरी सुभद्रा बलिनः सुता १६ लीलावती वीरसुता वीरभद्र
सुता निभा भीमात्मजा मान्यवती दम्भ पुत्री कुमुद्वती १७ याश्चैवन्नाभिनन्दन्ति स्वयम्बर कृतक्षणाः॥
ताश्चापि सबला वीरो जग्राह नृपतेः सुतः १८ निराकृत्य नृपान् सर्व्वांस्तासां पितृकुलानि च स्वकं हि
४८१ वीर्य्य माश्रित्य बलवान् स बलोद्धतः १९ एकदा तु विशालस्य वैदिशाधिपतेः सुतां वैशालिनीं स सुदतीं
स्वयम्बर कृतक्षणां २० परिभूयाखिलान् भूपान् स्वेच्छया न वृतस्तया बलाज्जग्राह विप्रर्षे यथान्या
बलगर्व्वितः २१ ततस्ते भूभृतः सर्व्वे बहुशस्तेन मानिना निराकृताः सुनिर्व्विस्म शोचुरन्योन्य माकुलाः
२२ समेतां ललनामेतामेकस्माद्बल शालिनां बहूनामेक वर्णानां जन्म धिग्वो महीभृतां २३ क्षत्रियो-
यः क्षतत्राणं वध्यमानस्य दुर्म्मदैः करोति तस्य तन्नाम वृथैवान्ये हि बिभ्रति २४ आत्मनोऽपि क्षतत्रा-
णं दुष्टा दस्मात् कुर्व्वतां भवतां क्षत्रियकुले जातानां कीदृशी मतिः २५ उच्चार्य्यते स्तुतियाञ्च सूत
मागध वन्दिभिः सा सत्या मा वृथा वीरा भवत्वरि विनाशनात् २६ चरतां सा वृथैवेह भूपाश्चारैर्दि
गन्तरैः पौरुषा अयिताः सर्व्वे विशिष्ट कुलसम्भवाः २७ विभेति कोन मरणात् को युद्धेन विनाऽमरः
विचिन्त्यैतन्न हातव्यं पौरुषं शस्त्र वृत्तिभिः २८ एतन्निशम्यते भूपा विस्पष्टामर्ष पूरिताः ऊचुः पर-
मार्कण्ड स्परं सर्व्वे समुत्तस्थुश्च सायुधाः २९ केचिद्रथानारुरुहुः केचिन्नागांस्तथा हयान् अन्येऽमर्ष पराधीना

त्त सुपेताः परातयः ३० इति श्री मार्कण्डेय पुराणे ऽवीक्षित चरिते १२३ मार्कण्डेय उवाच इति
संग्राम सज्जास्ते भूपा नृप सुतास्तथा निराकृताः सुबहुशस्तत्काल ज्याप्य वीक्षितः १ ततो ऽभूत् संग्रा-
मस्तस्य तैः सह दारुणः एकस्य बहुभि र्भूपैर् भूप पुत्र वरे मुने २ ते ऽसि शक्ति गदा बाण पाणा यत्तं सु-
दुर्मदाः अभिमन्तो युयुधिरे तैः समस्तैर सावधि ३ सतान् शरशतैः क्रुद्धो विभेद नृप नन्दनः कृतास्त्रो
बलवान् बाणै स्तेच तं विभिदुः शितैः ४ कस्य चिच्चिच्छेद बाहु मन्यस्य च शिरोधरं हृदि विव्याध चै-
वान्य मन्यं वक्षस्य ताडयत् ५ कराञ्चिच्छेद कर्णिणा स्तुरगस्य तथा शिरः तथान्ये बान्तरथे वाश्वान यस्या
न्यस्य सारथिं ६ बाणानापतत श्चक्रे द्विधा बाणौ स्तथा द्विधां चिच्छेदान्यस्य खड्गञ्च धनुरन्यस्य लाघ
वात् ७ तनुत्रे ऽपहृते तेन ननाशान्यो नृपात्मजः अवीक्षिता हत श्चान्यः पदातिः भग्न हौरणः ॥ ८ ॥
इत्या कुली कृते तस्मिन् समग्रे राज मण्डले तस्थुः सप्त शता वीराः ... हत निरुद्यमाः ९ आभिजा-
२८२ त्य वयः शौर्य्य वीर्य्य लज्जा समन्विताः निर्ज्जिते सकले सैन्ये पलायन परायणे १० तैः समेत्य मही-
पालैः सतु पुत्रो मही भृतः युयुधे धर्म्म युद्धेन तेन तेनाति कोपितः ११ विच्छिन्न यन्त्र कवचान् स तानपि
महाबलः कर्त्तव्य वस्थितस्ते च ततः क्रुद्धा महा मुने १२ धर्म्म मुत्सृज्य युयुधुर्युध्यमानेन धर्म्मतः नरेन्द्र
पुत्राः प्रस्वेद जल क्लिन्नाननाः समं १३ विव्याध कश्चि द्बाणौघैः कश्चि च्चिच्छेद कार्म्मुकं ध्वजमस्याप-
रो बाणौ श्छित्वा भूमाव पातयत् १४ जघ्नुरन्ये तथैवाश्वान् बभञ्जु श्चापरे रथं गदापातेनाथ वान्ये बाणै-
पृष्ठम ताडयत् १५ छिन्ने धनुषि स क्रोधः स तदा नृपतेः सुतः जग्राहासिं तथा चर्म तदप्यन्येन पातितं ॥
१६ छिन्नासि चर्म्मा जग्राह स गदां गदिनांवरः तामप्यन्यः क्षुरप्रेण चिच्छेद कृत हस्तवत् १७ अन्ये शर
सहस्रेण शते नान्ये नराधिपाः विभिदुः कौरवी कृत्य धर्म्म युद्ध पराङ्मुखाः १८ स विह्वलः पपातो-
र्व्यामेको बहुभिरर्दितः राज पुत्रो महा भागो बबन्धुस्ते च तं ततः १९ तम धर्म्मेण ते सर्व्वे गृहीत्वा नृपतेः
سुتं विशालेन समं राज्ञा वैदिशं विविशुः पुरं २० हृष्टाः प्रमुदिता बद्ध मादाय नृपात्मजं स्वयम्वरा-

مارکنڈی پوران

च सा कन्यान्यस्ता तेन ततः पुरः २१ पुनः पुनश्चापि प्रोक्ता तथापि च पुरोधसा आलम्ब्यतामिति वरो यस्ते
राजपुत्रोचते २२ यदा सामानिनी कश्चिन्न जग्राह वरं मुने तदा पप्रच्छ दैवज्ञं विवाहार्थं नरेश्वरः ॥ २३ ॥
विशिष्टतरमेतस्या विवाहाय दिनं वद अद्यैतदीदृक् संजातं युद्धं विघ्नाय यादृकं २४ मार्कण्डेय उवाच
इति पृष्टो नरेन्द्रेण स दैवज्ञो विमृश्य तत् दुर्मना प्राह विज्ञात परमार्थो महीपतिं २५ भविष्यन्त्यपराणी-
ह दिनानि पृथिवीपते प्रशस्तलग्नयुक्तानि शोभनान्यचिरेण च २६ करिष्यति विवाहार्थं तेषु प्राप्ते
युमानद अलमेतेन यत्रार्थे महाविघ्न उपस्थितः २७ इति श्री मार्कण्डेय पुराणे ऽवीक्षित्त चरित्ते १२४
मार्कण्डेय उवाच ततः शुश्राव तं बद्धं तनयं स करन्धमः तस्य पत्नी तथा वीरा अन्ये चापि महीभृत ॥१॥
तम धर्म्मेण तनयं बद्धं श्रुत्वा महीपतिः समस्तैः पृथिवीपालैश्चिरन्दध्यौ महामुने २ केचिद्रूचुर्मही-
पाला वध्याः सर्व्वे महीभृतः यैरेकः संयुगे बद्धः समस्तैस्तैर धर्मतः ३ युज्यतां वाहिनी शीघ्रमूचुरन्ये ऽ-
१८३ किमास्यते विशालो वध्यतां दुष्टस्तत्रये ऽन्ये समागताः ४ अन्ये तथोचुर्धर्म्मो ऽत्र त्यक्तः पूर्व्वं महीक्षिते
अन्यायेन बलाद्येन गृहीता तम वाञ्छती ५ स्वयम्बरे स्व शेषेषु तेन राजसुतास्तदा खली कृतास्ततः स-
र्व्वैः समेत्य स बद्धो कृतः ६ तेषामेतद्वचः श्रुत्वा वीरा वीर प्रजावती वीरगोत्र समुद्भूता वीरपत्नी प्रहर्षि-
ताः ७ उवाच भर्तुः प्रत्यक्षमन्येषाञ्च महीक्षितां भद्रं कृतं भद्र पुत्रा मम पुत्रेण पार्थिवाः ८ गृहीत्वा
यद्बलात् कन्या जित्वा सर्व्वे महीक्षितः तदर्थं युध्यमानो ऽयं युद्ध एकोन धर्म्मतः ९ तदप्यसत्सुतस्या
ज्ञो मन्ये नापचयप्रदं एतदेव हि पौरुष्यं यद धर्म्मवशान्नरः १० नीतिं न गणयत्येवं जिघांसुरिव केशरी
स्वयम्वराय विन्यस्ता मम पुत्रेण कन्यकाः ११ बह्वी गृहीता भूपानां पश्यतामति मानिनां क्षत्रिय
कुले जन्म कथाञ्चा हीन सेविता १२ बलादेव समादत्ते क्षत्रियो बलिनां पुरः लोह शृङ्खलबद्धा वानयशे
यान्ति कातराः १३ प्रसह्यकारिणो यान्ति राजानो धर्म्मशालिनः तदलन्दौर्मनस्येनं श्लाघ्यमेवास्य ऽ-
ارکنڈے پران बन्धनं १४ युष्माकमप्यायुधानामङ्ग भूर्द्धसुपातनं हत्वैव पृथिवीशानां पृथ्वी पुत्रादिकं वसु १५ मार्ग्यो

मा॰पु॰ चार्य्ये निमित्तानि ततो यातानि गौरवं तत्त्वय्यं तारणाया सुस्वन्दनान्य चिरो हत २६ सञ्जो कुरुतना
२७४ गाश्रवमचिरेण ससारथिं मन्यध्वं किं मही पाले बहुभिः सह विग्रहं २७ प्रभूता एव तोयाय भूरस्या-
ल्परणो क्रियाः कस्य नाल्पेषु सामर्थ्यं नरेन्द्रादिषु जायते २८ येभ्यो न विद्यते भीतिर्हन्तुं युष्मादृशा-
न्मुने व्याप्त लोकान् समस्तान् यो ह्यभिभूय यतोनरः व्यरोचते निस्तूरः सततं सोऽत्र दिवाकरः ॥ २९ ॥
मार्कण्डेय उवाच इत्थं सुहृद्भिर्वितो राजाऽनया पत्न्या करन्धमः चकार सर्वलोकोग्रो हन्तुं युष्मादृशा-
न्मुने २० ततस्तस्य समं भूपे विशालेन च सङ्गरः बभूव बहु युद्धस्य तेर श्रेष्ठे महामुने २१ दिनत्रयम
भूद्युद्धं तेन राज्ञा समं तदा करन्धमेन भूपानां विशालस्यानुकुर्वतां २२ यदा पराजयप्राये तस्य सर्व-
भूपमण्डलं तदा विशालोऽर्घ्यकरः करन्धममुपास्थितः २३ करन्धमोऽपि सम्प्रीत्या तेन राज्ञाभि
पूजितः विमुक्तो तनये तत्र निशां तां सुखमावसत् २४ तस्य कन्या सुपादाय विशाले समुपस्थिते ॥
१८४ अवीक्षित प्राह विप्रर्षे विवाहार्थे पितुः पुरः २५ नाहमेतां गृहीष्यामि न चान्यां योषितं नृपः परैर्य-
स्या निरक्षिन्त्याः संग्रामेऽहं पराजितः २६ अन्यस्मै सं प्रयच्छेमामियञ्चान्यं वरोत्तुलं अखण्डित-
यशो वीर्य्योयः परैर्नोपमानितः २७ परैः पराजितोऽहं यत्कातरेयं यथाऽबला किं मत्र मानुषत्वं
मेन तस्या मम चान्तरं २८ स्वतन्त्रता मनुष्याणां परतन्त्रा सदाऽबला नरोऽपि परतन्त्रो यस्तस्य-
को हृदनुष्यता २९ सोऽहमस्या मुखं भूयो हृष्टं दर्शयिता कथं योऽहमस्याः पुरो भूमौ परैर्भूपैः खि-
लीकृतः ३० इत्युक्ते तेन तनया सुवाच जगतीपतिः श्रुतं ते वचनं वत्से वदतोऽस्य महात्मनः ३१ वर
यान्यं पतिं यत्र मनस्ते रमते शुभे वयं वा तं प्रयच्छामो यस्मिंस्ते स्निग्ध वाहना एतयोर्द्वयोरेकमातिष्ठ मार्गयोः
तु चिराननं ३२ कन्योवाच पराजितोऽयं बहुभिर्न सम्यक् सम्यगाहरन् संग्रामे तद्धि यो वीर्य्ये हानिकारि
णी पार्थिव ३३ एको बहूनां युद्धाय गतानामिव केशरी यत्तांस्थितः परं शौर्य्यं तेनास्य प्रकटीकृतं ॥ ३४ ॥
मारकंडे पुरान न केवलं मये तस्थौ युद्धेनेऽप्यविलाञ्जिताः बहवो तेन यत्नेन विक्रमोऽपि प्रकाशितः ३५ शौर्य्यं विक्रम-

संयुक्त मिमं सर्व्वं मही क्षितः धर्म्मयुद्धम धर्म्मेण जितवन्तोऽन्तकास्त्वया ३६ नचापि रूपमात्रेऽहं लोभम
स्वगता पितः शौर्य्यं विक्रम धैर्य्याणि हरन्त्यस्य मनो मम ३७ तत्किमुक्तेन बहुना याच्यतां मत्कृते नृ-
पः त्वया महानुभावोऽयं नान्यो मे भविता पतिः ३८ विशाल उवाच राजपुत्र सुता प्राह मम ते तच्छोभनं
वचः एवम्भैव त्वया तुल्यः कुमारो न मही तले ३९ अवि सञ्चारिते शौर्य्ये मतीव च पराक्रमः पावया
स्त्व कुलं वीर दुहितुर्मे परिग्रहात् ४० राजपुत्र उवाच नाहमेतां गृहीष्यामि न चान्यां योषितं नृप आत्म
न्ये वहिमे बुद्धिः स्त्री मयी मनुजेश्वर ४१ मार्कण्डेय उवाच ततः करन्धमः प्राह पुत्रेयं गृह्यतां त्वया वि-
शाल तनया सुभ्रूस्त्वयि हार्दवती दृढं ४२ राजपुत्र उवाच नाज्ञाभङ्गः कदाचित्ते कृत पूर्व्वो मया प्रभो ॥
आज्ञापयाद्य मां तात यथाज्ञां करवाणि ते ४३ मार्कण्डेय उवाच अत्यन्त निश्चितमतौ तस्मिन्राजसुते स-
ती तामुवाच विशालोऽपि व्याकुली कृत मानसः ४४ निवर्त्यतां मनः पुत्रि एतस्माच्च प्रयोजनात् अन्यं
२८८ वरय भर्त्तारं सन्त्यनेके नृपात्मजाः ४५ कन्योवाच वरं हरणोम्यहं तात ममैष यदि नेच्छति तपसोऽन्यो
न मे भर्त्ता जन्मन्यस्मिन् भविष्यति ४६ मार्कण्डेय उवाच ततः करन्धमो राजा विशालेन समं मुदा स्थि-
त्वा दिनत्रयं तत्र निजमभ्याययौ पुरं ४७ अवीक्षितोऽपि तेनैव पित्राऽन्यैश्च नराधिपैः निदर्शनैः पुरावृत्तैः
सान्त्वितोऽभ्यागमत्पुरं ४८ सापि कन्या वनं गत्वा निसृष्टा निजबान्धवैः तपस्तेपे निराहारा वैराग्ये पर-
मास्थिता ४९ निराहारा यदा सा तु मासत्रयमवस्थिता सम्प्राप परमामार्त्तिं कृशा धमनि सन्तता ॥ ५०॥
मन्दोत्साहातितन्वङ्गी मुमूर्षुरपि बालिका देहत्यागाय सा चक्रे तदा बुद्धिं नृपात्मजा ५१ आत्म त्या-
गाय तां ज्ञात्वा कृत बुद्धिं सुरास्ततः समेत्य प्रेषयामासुर्देवदूतं न्तदन्तिके ५२ समुपेत्य सुतां प्राह दू-
तोऽहं पार्थिवात्मजे प्रेषितस्त्रिदशैस्तुभ्यं यत्कार्य्यं तन्निशामय ५३ न भवत्या परित्याज्यं शरीरं
मति दुर्लभं त्वं भविष्यसि कल्याणि जननी चक्रवर्त्तिनः ५४ पुत्रेण च महाभागे भोक्ष्यस्यानिहतारि
णा अव्याहताज्ञेन चिरं सप्तद्वीपवती मही ५५ हन्तव्यस्तेन तक्रजिद्देवानां पुरतोरिपुः अयः शङ्कु॰

مارکنڈے پوران

स्तया क्रूरो धर्म्मस्त्याज्यस्ततः प्रजाः ५६ परिपालनीयमखिलं चातुर्वर्ण्यं स्वधर्मतः हन्तव्यास्स्व-
धर्म्मेच्छायै चान्ये दुष्टचेष्टिताः ५७ यष्टव्यं विविधैर्यज्ञैः समाप्तवरदक्षिणैः वाजिमेधादिभिर्भद्रे !
बहुसहस्रैश्च संख्यया ५८ मार्कण्डेय उवाच तं दृष्ट्वा साऽन्तरिक्षस्थं दिव्यस्रगनुलेपनं देवदूतमु-
वाचेदं राजपुत्री ततो मृदु ५९ सत्यं त्वमागतः स्वर्गाद्देवदूतो न संशयः किन्तु भर्त्रा विना पुत्रः सकथं
मे भविष्यति ६० अवीक्षितं मृते भर्त्ता मम नान्योऽत्र जन्मनि भवितेति प्रतिज्ञातं मयैतत्सन्निधौ पि-
तुः ६१ स चैनेच्छति मां भोक्तुं मत्पित्रा जनकेन च करन्धमेनाथ सम्यक् याचितश्च मया तथा ॥ ६२ ॥
देवदूत उवाच किमनेन महाभागे बहुनोक्तेन ते सुतः समुत्पत्स्यति मात्याक्षीस्त्वमात्मानमधर्मतः
६३ अत्रैव कानने तिष्ठ तनुं क्षीणाङ्गपोषय तपःप्रभावादेतत्ते सर्व्वं साधु भविष्यति ६४ मार्कण्डेय
उवाच इत्युक्त्वा देवदूतोऽसौ यथागतमगच्छत चकारानुदिनं सुभ्रूः साप्यात्मतनुपोषणं ६५ इति

۱۲۶ श्री मार्कण्डेय पुराणेऽवीक्षितचरिते १२५ मार्कण्डेय उवाच अथ सावीक्षितो माता वीरा वीरप्रजाव-
ती पुराऽयेऽहनि समाहूय प्राह पुत्रमवीक्षितं १ अत्राहमभ्यनुज्ञाता तव पित्रा महात्मना उपवासं करि-
ष्यामि दुष्करोऽयं किमिच्छकः २ स चायत्तस्तव पितुस्त्वया साध्योमयापि च प्रतिज्ञातस्त्वया पुत्र ततस्त
त्वयतास्यहं ३ इच्छयाऽर्द्धं महाकोशात्तव दास्याम्यहं पितुः धनन्ते पितुरायत्तमनुज्ञाताऽस्मि तेन च ॥
४ क्लेशसाध्यो महायत्नसाध्योऽपि श्रेयान्नाविष्यति साध्यो भवेद्वा यदि ते कश्चिद्बलपराक्रमे ५ सतेऽसाध्यो
ह्यन्यथा वा दुःखसाध्यो भविष्यति तत्त्वं प्रतिज्ञां कुरुषे यदि पुत्रात्र चैव ते तदेतदहमावाप्स्ये कथ्यतां
धन्यतं तव ६ वित्ते मे पितुरायत्तमासमित्वं न तत्त्वयै यन्मच्छरीरनिष्पाद्यं तत्करिष्येऽत्र योदितं ७ कि
मिच्छकं व्रतं मातर्निश्चिन्ता भव निर्व्यथा राज्ञा पित्राऽभ्यनुज्ञातं यदि वित्ते प्रवेशो मे ८ मार्कण्डेय
उवाच ततः सा राजमहिषी तद्व्रतं सम्यु पोषिता यथोक्तासाऽकरोत्पूजां राजराजस्य संयता ॥ ९ ॥
निधीनामष्टशेषाणां निधिपालगणस्य च लक्ष्म्याश्च परया भक्त्या यतवाक्कायमानसा १० विविक्ते

तु गृहस्थोऽयमथ राजा करन्धमः आसीन उक्तः सचिवैर्नीतिशास्त्रविशारदैः ११ सचिवा ऊचुः राजन्
वयः परिणतन्ते वै न च्छामत्तो महीं शास्ति तनयोऽवीक्षित्त्यक्तदारपरिग्रहः १२ अपुत्रः स्वर्गते निशं।
यदा भूप गमिष्यसि तदारिपक्षः पृथिवीं निश्चितं तव यास्यति १३ वंशक्षयस्ते भविता पितृपिण्डोद-
कक्षयः एतन्महत्ते विरतं क्रियाहान्या भविष्यति १४ तस्मात् कुरु तथा भूप यथा ते तनयः पुनः करोति
सततं बुद्धिं पितृणामुपकारिणीं १५ मार्कण्डेय उवाच एतस्मिन्नन्तरे शब्दं शुश्राव जगतीपतिः ॥
पुरोहितस्य वीरायागदतोऽप्यर्थिनं प्रति १६ कः किमिच्छति दुःसाध्यं कस्य किं साध्यतामिति करन्धम
स्य महिषी किमिच्छकमुपोषिता १७ राजपुत्रोऽप्यवीक्षित्तु श्रुत्वा पौरोहितं वचः प्रत्युवाचार्थिनः स-
र्व्वान् राजद्वारमुपागतान् १८ मया साध्यं शरीरेण यस्य किञ्चिद्ब्रवीतु सः मम माता महाभागा किमि-
च्छकमुपोषिता १९ शृण्वन्तु मेऽर्थिनः सर्व्वे प्रतिज्ञातं मया तदा किमिच्छथ ददाम्येष क्रीयमाणे कि-
१८८ मिच्छके २० मार्कण्डेय उवाच ततो राजा निशम्यैतद्वाक्यं पुत्रमुखाच्च्युतं समुत्पत्याब्रवीत् पुत्र मह्यम-
र्थी प्रयच्छ मे २१ अवीक्षिदुवाच दातव्यं यन्मया तात भवते तद्ब्रवीहि मां कर्त्तव्यं दुष्करं वा ते साध्यं।
दुःसाध्यमेव वा २२ राजोवाच यदि सत्यप्रतिज्ञस्त्वं ददासि च किमिच्छकं पौत्रस्य दर्शय मुखं म-
मोत्सङ्गगतस्य तत् २३ अवीक्षिदुवाच अहन्त्वेकस्तनयो ब्रह्मचर्य्यञ्च मे नृप न मे पुत्रोऽस्ति।
पौत्रस्य दर्शयामि कथं मुखं २४ राजोवाच पापाय ब्रह्मचर्य्यन्ते यदिदं धार्य्यते त्वया तस्मात् त्वं।
मोचयात्मानं मम पौत्रञ्च दर्शय २५ अवीक्षिदुवाच विषमस्या महाराज यदल्यं तत् समादिश ॥
वैराग्येण मया त्यक्तः स्त्रीसम्भोगस्तथा त्वसौ २६ राजोवाच बहुभिर्युध्यमानानां दृष्टो वै वैरिणां जयः
तत्रापि यदि वैराग्यमुपैषि तद पण्डितः २७ किं वानो बहुनोक्तेन ब्रह्मचर्य्यं परित्यज मातुस्त्व मिच्छ-
यावत्कं पौत्रस्य मम दर्शय २८ मार्कण्डेय उवाच यदा स बहुभिस्तेन प्रोक्तः पुत्रेण पार्थिवः नान्यत्
प्रार्थयते किञ्चित् तदा पुत्रोऽब्रवीत् पुनः २९ दत्त्वा किमिच्छकं तुभ्यं प्राप्तो हं तात संकटं तत्कारिष्ये।

मा०पु० सि निर्लज्जो भूयो दारपरिग्रहे ३० स्त्रियः समक्षं विजितः पतितो धरणीतले त्वं पतिर्भविता भूयस्त्वेतेत्तद
२२८ ति दुष्करं ३१ तथापि किं करोम्येष सत्यपाशवशङ्गतः करिष्यामि यथात्थ त्वं भुज्यतां निजशासनं ॥ ३२॥
इति श्रीमार्कण्डेयपुराणेऽवीक्षितचरिते सप्तविंशत्यधिकशततमोऽध्यायः १२७ मार्कण्डेय उवाच ॥
कदाचिद्राजपुत्रोऽसौ मृगयामचरद्वने मृगान्विध्यन्वराहांश्च शार्दूलादींश्च दंष्ट्रिणः १ शुश्राव सहसा
शब्दं त्राहि त्राहीति घोषितः विक्रोशन्त्याः सुबहुशो भयगद्गदमुच्चकैः २ माभैर्माभैरिति वदन् राजपुत्रः
सवेगितः चोदयामास तुरगं यतः शब्दः समागतः ३ ततश्च सापि चुक्रोश कन्यका विजने वने गृहीता
दनुपुत्रेण दृढकेशेन मानिनी ४ करन्धमसुतस्याहं भार्य्या चाहमवीक्षितः हरत्यनार्य्यो विपिने पृथिवी
शस्य धीमतः ५ यस्य सर्व्वे महीपालास्तथा गन्धर्व्वगुह्यकाः नमस्थाः पुरः स्थातुं तस्य भार्य्या हृता
स्म्यहं ६ यस्य मृत्योरिव क्रोधः शक्रस्येव पराक्रमः करन्धमसुतस्येष तातस्य भार्य्या हृतास्म्यहं ७ मार्क-
४८० ण्डेय उवाच इत्याकर्ण्य महीपालतनयः सशरासनो चिन्तयामास किमिदं मम भार्य्यात्र कानने ॥
मायेयं रक्षसां नूनं दुष्टानां काननौकसां अथवा गत एवाहं सर्व्वं वेत्स्यामि कारणं ९ त्वरितः स ततो ग-
त्वा ददर्शाति मनोरमां कानने कन्यकामेकां सर्व्वालङ्कारभूषितां १० गृहीतां दनुपुत्रेण दृढकेशेन द-
ण्डिना त्राहि त्राहीति करुणं विक्रोशन्तीं पुनः पुनः ११ माभैरिति स तामाह हतोऽस्मीति च तं वदन् शा
सती मां महीं दुष्टः को भूपेऽत्र करन्धमे १२ यस्य प्रतापावनता भुवि सर्व्वे महीक्षितः ततस्समागतं दृष्ट्वा
गृहीतवरकार्मुकं १३ मां त्राहीत्याह तन्वङ्गी हृतास्म्येषेति चासकृत् राज्ञः करन्धमस्याहं स्नुषा भार्य्या
प्यवीक्षितः हृतास्म्येतेन दुष्टेन सनाथा नाथवद्वने १४ मार्कण्डेय उवाच ततो विमृश्येव कथमवीक्षि
तस्सतथोदितं कथमेषा हि मे भार्य्या स्नुषा तातस्य वा कथं १५ अथवा मोचयाम्येतां तन्वीं वेत्स्यामि तत्त
पुनः क्षत्रियैर्धार्य्यते शस्त्रमार्तानां त्राणकारणात् १६ ततः क्रुद्धोऽब्रवीद्वीरो दानवं तं सुदुर्मतिं जी-
مارکنڈے پوران वन् गच्छ विमुञ्चैनामन्यथा न भविष्यसि १७ ततः स तां विहायोच्चैर्दण्डमुत्क्षिप्य दानवः समभ्यधाव

त्सो ऽप्येनं शरवर्षैर्वा किरन् १८ मर्माघ्नं मार्गणो बाणौघे दानवो ऽति मदान्वितः राजपुत्राय चिक्षेपस्तडं
शङ्कु शता हन्तं १९ तमापतन्तं चिच्छेद शरैर्भूपसुतस्ततः सो ऽप्यासमन्नं गृहीत्वोग्रं इन्द्रमसाजौ व्यवस्थि
तः २० सृजतः शरवर्षाणि तं चिक्षेप ततो द्रुमं सच तस्मिन् लग्न चक्रे भल्लैः कार्मुक प्रेषितैः २१ ततश्
चिक्षेप च शिलां राजपुत्राय दानवः सापि मोघा पपातोर्व्यां मुक्ता तेन लाघवात् २२ राजपुत्राय
कुपितो यद्यच्चिक्षेप दानवः तत्तच्चिच्छेद बाणौघैर्भूभृत्सूनुः सलीलया २३ ततो विच्छिन्नदण्डो
ऽसौ विच्छिन्नसकलायुधः मुष्टिमुद्यम्य स क्रोधो राजपुत्रमधावत २४ तस्यापतत एवासौ करन्धमसु
तः शिरः छित्त्वा वर्त्त सपत्रेण पातयामास वै भुवि २५ तस्मिन् विनिहते दैवे दानवे दुष्टचेष्टिते करन्ध
मसुतः सर्वैः साधु साध्विति भाषितः २६ वरं वृणीष्वेति तदा देवैरुक्तो नृपात्मजः वव्रे पुत्रं महावीर्यं
पितुः प्रियचिकीर्षया २७ देवा ऊचुः भविष्यति हि ते पुत्रश्चक्रवर्त्ती महाबलः अस्यामेव हि कन्यायां
२८१ मोक्षिता यां त्वया ऽनघ २८ राजपुत्र उवाच पित्राहं सत्यपाशेन बद्ध इच्छाम्यहं सुतां राजभिर्निर्जि
तेनाजौ त्यक्तो मे दारसंग्रहः २९ साच मे याचती त्यक्ता विशालनृपतेः सुता तयाच सत्कृते त्यक्तो मा
मृते नरसङ्गमः ३० तत्कथं तामपास्याद्य विशालतनयामहं नृशंसात्मा करिष्यामि अन्यनारीपरि-
ग्रहं ३१ देवा ऊचुः इयमेव हि ते भार्या श्लाघ्यते यात्वया सदा विशालस्य सुता सुभ्रूस्त्वत्कृते याश्रि
ता तपः ३२ तस्यामुत्पत्स्यते वीरः सप्तद्वीपप्रसाधकः यष्टायज्ञसहस्राणां चक्रवर्त्ती सुतस्तव ॥ ३३॥
मार्कण्डेय उवाच इत्युक्त्वा गौर्ययुर्देवाः करन्धमसुतं द्विज सोऽप्याहतां तदा पत्नीं कथ्यतां भीरु किं
त्विदं ३४ सा चास्मै कथयामास त्यक्ताहं भवता यदा त्यक्त्वा बन्धुजनाश्रयं निर्वेदात् समुपागता ॥ ३५॥
तत्राहं तपसा वीर क्षीणप्रायं कलेवरं त्यक्तुकामा समभ्येत्य देवदूतेन वारिता ३६ भविष्यति च पुत्रस्ते
चक्रवर्त्ती महाबलः प्रीणयिष्यति यो देवान् असुरांश्च हनिष्यति ३७ इति देवाज्ञया तेन देवदूतेन वारिता
مارکنڈے پوران न संत्यक्तवती देहं त्वत्सङ्गमनोरथा ३८ परश्वश्च महाभाग स्नातुं गङ्गाह्रदं गता अवतीर्णा विकृष्टा।

स्मिन्वद्ध नागेन केनचित् ३९ ततोऽस्मान्नीता तेन तत्र च मे सुतं नागाः सहस्रशास्तस्थुर्नागपत्न्यः कु-
मारकाः ४० तुष्टुवुर्मां समभ्येत्य मामन्ये ऽभूतयंस्तथा यथाचिरेण विनयं नागा मामङ्गनास्तथा ॥ ४१ ॥
प्रसादं कुरु सर्व्वेषां त्वमस्माकं सुतस्त्वया अपराधमुपेतानां संनिवार्य्यो वधोन्मुखः ४२ अपराधं करि-
ष्यन्ति त्व त्सुतस्यानिलाशनाः तन्निमित्तं निवार्य्यो ऽसौ प्रसादः क्रियतामिति ४३ तथेति च मया ऽ
प्रोक्ते दिव्यैः पाताल भूषणैः भूषिताहं तथा पुष्पैर्गन्धवासोभिरुत्तमैः ४४ समानीता तथा लोकमि
मन्ते नानिलाशिना पुरा यथा कान्तिमती भूर्व्वद्रूपशालिनी ४५ इति रूपवतीं दृष्ट्वा सर्व्वालङ्कार
भूषितां जग्राह दृढ केशो ऽयं हर्त्तुकामः सुदुर्मतिः ४६ गुप्ता ह्याहुवले नाहं राजपुत्र विमोक्षिता तत्प्र
सीद महाबाहो मां प्रतीच्छत्वयासमः भूलोके राजपुत्रो ऽन्यो नास्ति सत्यं ब्रवीम्यहं ४७ इति श्री मार्क-
ण्डेय पुराणे ऽवीक्षित चरिते १२७ मार्कण्डेय उवाच इति तस्या वचः श्रुत्वा स्मृत्वा पितृवचः शुभं ॥

१०० किमिच्छकप्रतिज्ञा ते यदुक्तं तेन भूभृता १ प्रत्युवाच सतां कन्या मवीक्षिन्नृपतेः सुतः सानुरागमनाः ऽ
कन्यां त्यक्तभोगाश्च तत्कृते २ यदाहं त्यक्तवांस्तन्वीं त्वामराति पराजितः विजित्य शत्रून् संप्राप्तस्त्वंम
यात्र करोमि किं ३ कन्योवाच मम पाणिं गृहाण त्वं रमणीये ऽत्र कानने सकामायाः सकामेन सङ्ग
मो गुणवान् भवेत् ४ राजपुत्र उवाच एवं भवतु भद्रन्ते विधिरेवात्र कारणं अन्यथा कथमन्यत्रत्वा
महञ्च समागतः ५ मार्कण्डेय उवाच एतस्मिन्नन्तरे प्राप्तो गन्धर्व्वस्तनयो मुने वराप्सरोभिः सहितो
गन्धर्व्वैरपरैर्वृतः ६ गन्धर्व्व उवाच राजपुत्र सुते यस्मे भामिनी नाम मानिनी अभिशापादगस्त्यस्य वि-
शाल तनया ऽभवत् ७ बालभावेन यो ऽगस्त्यः कोपितः क्रीडमानया ततस्तेन तदा शप्ता मानुषी त्वं ऽ
भविष्यसि ८ प्रसादितः स चास्माभिर्व्वालेयम विवेकिनी तदा पराधाद्दिव्यैव प्रसादः क्रियतामिति ॥
९ प्रसाद्यमानः सो ऽस्माभिरिदमाह महामुनिः बालेति मत्वा शापो ऽल्पो दत्तो ऽस्या नान्यथैव तत् १०
इति शापादगस्त्यस्य विशाल भवने शुभा जातेयं मत्सुता सुभ्रूर्भाविनी नाम नामतः ११ तदस्याहं कृते

